# श्रीदेवी अथवा पार्वतिसहस्रनामस्तोत्रम् कूर्मपुराणान्तर्गतम्

अथ देवीमाहात्म्यम् ।
सूत उवाच
इत्याकर्ण्याथ मुनयः कूर्मरूपेण भाषितम् ।
विष्णुना पुनरेवैनं प्रणता हरिम् ॥ १२।१॥

ऋषयः ऊचुः
कैषा भगवती देवी शंकरार्द्धशरीरिणी ।
शिवा सती हैमवती यथावद्ब्रूहि पृच्छताम् ॥ १२।२॥

तेषां तद्वचनं श्रुत्वा मुनीनां पुरुषोत्तमः ।
प्रत्युवाच महायोगी ध्यात्वा स्वं परमं पदम् ॥ १२।३॥

श्रीकूर्म उवाच
पुरा पितामहेनोक्तं मेरुपृष्ठे सुशोभने ।
रहस्यमेतद् विज्ञानं गोपनीयं विशेषतः ॥ १२।४॥

सांख्यानां परमं सांख्यं ब्रह्मविज्ञानमुत्तमम् ।
संसारार्णवमग्नानां जन्तूनामेकमोचनम् ॥ १२।५॥

या सा माहेश्वरी शक्तिर्ज्ञानरूपाऽतिलालसा ।
व्योमसंज्ञा परा काष्ठा सेयं हैमवती मता ॥ १२।६॥

शिवा सर्वगताऽनान्ता गुणातीतातिनिष्कला ।
एकानेकविभागस्था ज्ञानरूपाऽतिलालसा ॥ १२।७॥

अनन्या निष्कले तत्त्वे संस्थिता तस्य तेजसा ।
स्वाभाविकी च तन्मूला प्रभा भानोरिवामला ॥ १२।८॥

एका माहेश्वरी शक्तिरनेकोपाधियोगतः ।
परावरेण रूपेण क्रीडते तस्य सन्निधौ ॥ १२।९॥

सेयं करोति सकलं तस्याः कार्यमिदं जगत् ।
न कार्यं नापि करणमीश्वरस्येति सूरयः ॥ १२।१०॥

चतस्रः शक्तयो देव्याः स्वरूपत्वेन संस्थिताः ।
अधिष्ठानवशात्तस्याः शृणुध्वं मुनिपुंगवाः ॥ १२।११॥

शान्तिर्विद्या प्रतिष्ठा च निवृत्तिश्चेति ताः स्मृताः ।
चतुर्व्यूहस्ततो देवः प्रोच्यते परमेश्वरः ॥ १२।१२॥

अनया परया देवः स्वात्मानन्दं समश्नुते ।
चतुर्ष्वपि च वेदेषु चतुर्मूर्तिर्महेश्वरः ॥ १२।१३॥

अस्यास्त्वनादिसंसिद्धमैश्वर्यमतुलं महत् ।
तत्सम्बन्धादनन्ताया रुद्रेण परमात्मना ॥ १२।१४॥

सैषा सर्वेश्वरी देवी सर्वभूतप्रवर्तिका ।
प्रोच्यते भगवान् कालो हरिः प्राणो महेश्वरः ॥ १२।१५॥

तत्र सर्वमिदं प्रोतमोतंचैवाखिलं जगत् ।
स कालोऽग्निर्हरो रुद्रो गीयते वेदवादिभिः ॥ १२।१६॥

कालः सृजति भूतानि कालः संहरते प्रजाः ।
सर्वे कालस्य वशगा न कालः कस्यचिद् वशे ॥ १२।१७॥

प्रधानं पुरुषस्तत्त्वं महानात्मा त्वहंकृतिः ।
कालेनान्यानि तत्त्वानि समाविष्टानि योगिना ॥ १२।१८॥

तस्य सर्वजगन्मूर्तिः शक्तिर्मायेति विश्रुता ।
तदेयं भ्रामयेदीशो मायावी पुरुषोत्तमः ॥ १२।१९॥

सैषा मायात्मिका शक्तिः सर्वाकारा सनातनी ।
वैश्वरूपं महेशस्य सर्वदा सम्प्रकाशयेत् ॥ १२।२०॥

अन्याश्च शक्तयो मुख्यास्तस्य देवस्य निर्मिताः ।
ज्ञानशक्तिः क्रियाशक्तिः प्राणशक्तिरिति त्रयम् ॥ १२।२१॥

सर्वासामेव शक्तीनां शक्तिमन्तो विनिर्मिताः ।
माययैवाथ विप्रेन्द्राः सा चानादिरनश्वराः ॥ १२।२२॥

सर्वशक्त्यात्मिका माया दुर्निवारा दुरत्यया ।
मायावी सर्वशक्तीशः कालः कालकारः प्रभुः ॥ १२।२३॥

करोति कालः सकलं संहरेत् काल एव हि ।

कालः स्थापयते विश्वं कालाधीनमिदं जगत् ॥ १२।२४॥

लब्ध्वा देवाधिदेवस्य सन्निधिं परमेष्ठिनः ।
अनन्तस्याखिलेशस्य शंभोः कालात्मनः प्रभोः ॥ १२।२५॥

प्रधानं पुरुषो माया माया चैवं प्रपद्यते ।
एका सर्वगतानन्ता केवला निष्कला शिवा ॥ १२।२६॥

एका शक्तिः शिवैकोऽपि शक्तिमानुच्यते शिवः ।
शक्तयः शक्तिमन्तोऽन्ये सर्वशक्तिसमुद्भवाः ॥ १२।२७॥

शक्तिशक्तिमतोर्भेदं वदन्ति परमार्थतः ।
अभेदंचानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः ॥ १२।२८॥

शक्तयो गिरजा देवी शक्तिमानथ शंकरः ।
विशेषः कथ्यते चायं पुराणे ब्रह्मवादिभिः ॥ १२।२९॥

भोग्या विश्वेश्वरी देवी महेश्वरपतिव्रता ।
प्रोच्यते भगवान् भोक्ता कपर्दी नीललोहितः ॥ १२।३०॥

मन्ता विश्वेश्वरो देवः शंकरो मन्मथान्तकः ।
प्रोच्यते मतिरीशानी मन्तव्या च विचारतः ॥ १२।३१॥

इत्येतदखिलं विप्राः शक्तिशक्तिमदुद्भवम् ।
प्रोच्यते सर्ववेदेषु मुनिभिस्तत्त्वदर्शिभिः ॥ १२।३२॥

एतत्प्रदर्शितं दिव्यं देव्या माहात्म्यमुत्तमम् ।
सर्ववेदान्तवीदेषु निश्चितं ब्रह्मवादिभिः ॥ १२।३३॥

एकं सर्वगतं सूक्ष्मं कूटस्थमचलं ध्रुवम् ।
योगिनस्तत्प्रपश्यन्ति महादेव्याः परं पदम् ॥ १२।३४॥

आनन्दमक्षरं ब्रह्म केवलं निष्कलं परम् ।
योगिनस्तत्प्रपश्यन्ति महादेव्याः परं पदम् ॥ १२।३५॥

परात्परतरं तत्त्वं शाश्वतं शिवमच्युतम् ।
अनन्तप्रकृतौ लीनं देव्यास्तत्परमं पदम् ॥ १२।३६॥

शुभं निरञ्जनं शुद्धं निर्गुणं द्वैतवर्जितम् ।
आत्मोपलब्धिविषयं देव्यास्ततपरमं पदम् ॥ १२।३७॥

सैषा धात्री विधात्री च परमानन्दमिच्छताम् ।
संसारतापानखिलान्निहन्तीश्वरसंश्रया ॥ १२।३८॥

तस्माद्विमुक्तिमन्विच्छन् पार्वतीं परमेश्वरीम् ।
आश्रयेत्सर्वभूतानामात्मभूतां शिवात्मिकाम् ॥ १२।३९॥

लब्ध्वा च पुत्रीं शर्वाणीं तपस्तप्त्वा सुदुश्चरन् ।
सभार्यः शरणं यातः पार्वतीं परमेश्वरीम् ॥ १२।४०॥

तां दृष्ट्वा जायमानां च स्वेच्छयैव वराननाम् ।
मेना हिमवतः पत्नी प्राहेदं पर्वतेश्वरम् ॥ १२।४१॥

मेनोवाच
पश्य बालामिमां राजन्राजीवसदृशाननाम् ।
हिताय सर्वभूतानां जाता च तपसावयोः ॥ १२।४२॥

सोऽपि दृष्ट्वा ततः देवीं तरुणादित्यसन्निभाम् ।
कपर्दिनीं चतुर्वक्त्रां त्रिनेत्रामतिलालसाम् ॥ १२।४३॥

अष्टहस्तां विशालाक्षीं चन्द्रावयवभूषणाम् ।
निर्गुणां सगुणां साक्षात्सदसद्व्यक्तिवर्जिताम् ॥ १२।४४॥

प्रणम्य शिरसा भूमौ तेजसा चातिविह्वलः ।
भीतः कृताञ्जलिस्तस्याः प्रोवाच परमेश्वरीम् ॥ १२।४५॥

हिमवानुवाच
का त्वं देवि विशालाक्षि शशाङ्कावयवाङ्किते ।
न जाने त्वामहं वत्से यथावद्ब्रूहि पृच्छते ॥ १२।४६॥

गिरीन्द्रवचनं श्रुत्वा ततः सा परमेश्वरी ।
व्याजहार महाशैलं योगिनामभयप्रदा ॥ १२।४७॥

देव्युवाच
मां विद्धि परमां शक्तिं परमेश्वरसमाश्रयाम् ॥ १२।४८॥

अनन्यामव्ययामेकां यां पश्यन्ति मुमुक्षवः ।
अहं वै सर्वभावानात्मा सर्वान्तरा शिवा ॥ १२।४९॥

शाश्वतैश्वर्यविज्ञानमूर्तिः सर्वप्रवर्तिका ।
अनन्ताऽनन्तमहिमा संसारार्णवतारिणी ॥ १२।५०॥

दिव्यं ददामि ते चक्षुः पश्य मे रूपमैश्वरम् ।
एतावदुक्त्वा विज्ञानं दत्त्वा हिमवते स्वयम् ॥ १२।५१॥

स्वं रूपं दर्शयामास दिव्यं तत् पारमेश्वरम् ।
कोटिसूर्यप्रतीकाशं तेजोबिम्बं निराकुलम् ॥ १२।५२॥

ज्वालामालासहस्राढ्यं कालानलशतोपमम् ।
दंष्ट्राकरालं दुर्द्धर्षं जटामणडलमण्डितम् ॥ १२।५३॥

किरीटिनं गदाहस्तं शङ्कचक्रधरं तथा ।
त्रिशूलवरहस्तं च घोररूपं भयानकम् ॥ १२।५४॥

प्रशान्तं सोम्यवदनमनन्ताश्चर्यसंयुतम् ।
चन्द्रावयवलक्ष्माणं चन्द्रकोटिसमप्रभम् ॥ १२।५५॥

किरीटिनं गदाहस्तं नूपुरैरुपशोभितम् ।
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ॥ १२।५६॥

शङ्खचक्रधरं काम्यं त्रिनेत्रं कृत्तिवाससम् ।
अण्डस्थं चाण्डबाह्यस्थं बाह्यमाभ्यन्तरं परम् ॥ १२।५७॥

सर्वशक्तिमयं शुभ्रं सर्वाकारं सनातनम् ।
ब्रह्मोन्द्रोपेन्द्रयोगीन्द्रैर्वन्धमानपदाम्बुजम् ॥ १२।५८॥

सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् ।
सर्वमावृत्य तिष्ठन्तं ददर्श परमेश्वरम् ॥ १२।५९॥

दृष्ट्वा तदीदृशं रूपं देव्या माहेश्वरं परम् ।
भयेन च समाविष्टः स राजा हृष्टमानसः ॥ १२।६०॥

आत्मन्याधाय चात्मानमोङ्कारं समनुस्मरन् ।
नाम्नामष्टसहस्रेण तुष्टाव परमेश्वरीम् ॥ १२।६१॥

हिमवानुवाच
शिवोमा परमा शक्तिरनन्ता निष्कलामला ।
शान्ता माहेश्वरी नित्या शाश्वती परमाक्षरा ॥ १२।६२॥

अचिन्त्या केवलाऽनन्त्या शिवात्मा परमात्मिका ।
अनादिरव्यया शुद्धा देवात्मा सर्वगाऽचला ॥ १२।६३॥

एकानेकविभागस्था मायातीता सुनिर्मला ।
महामाहेश्वरी सत्या महादेवी निरञ्जना ॥ १२।६४॥

काष्ठा सर्वान्तरस्था च चिच्छक्तिरतिलालसा ।
नन्दा सर्वात्मिका विद्या ज्योतीरूपाऽमृताक्षरा ॥ १२।६५॥

शान्तिः प्रतिष्ठा सर्वेषां निवृत्तिरमृतप्रदा ।
व्योममूर्तिर्व्योमलया व्योमाधाराऽच्युताऽमरा ॥ १२।६६॥

अनादिनिधनाऽमोघा कारणात्माकुलाकुला ।
स्वतः प्रथमजानाभिरमृतस्यात्मसंश्रया ॥ १२।६७॥

प्राणेश्वरप्रिया माता महामहिषघातिनी ।
प्राणेश्वरी प्राणरूपा प्रधानपुरुषेश्वरी ॥ १२।६८॥

महामाया सुदुष्पूरा मूलप्रकृतिरीश्वरी
सर्वशक्तिकलाकारा ज्योत्स्ना द्योर्महिमास्पदा ॥ १२।६९॥

सर्वकार्यनियन्त्री च सर्वभूतेश्वरेश्वरी ।
संसारयोनिः सकला सर्वशक्तिसमुद्भवा ॥ १२।७०॥

संसारपोता दुर्वारा दुर्निरीक्ष्य दुरासदा ।
प्राणशक्तिः प्राणविद्या योगनीपरमा कला ॥ १२।७१॥

महविभूतिदुर्दर्षा मूलप्रकृतिसम्भवा ।
अनाद्यनन्तविभवा परमाद्यापकर्षिणी ॥ १२।७२॥

सर्गस्थित्यन्तकरणी सुदुर्वाच्यादुरत्यया ।
शब्दयोनिः शब्दमयी नादाख्या नादविग्रहा ॥ १२।७३॥

अनादिरव्यक्तगुणा महानन्दा सनातनी ।
आकाशयोनिर्योगस्था महायोगेश्वरेश्वरी ॥ १२।७४॥

महामाया सुदुष्पारा मूलप्रकृतिरीश्वरी
प्रधानपुरुषातीता प्रधानपुरुषात्मिका ॥ १२।७५॥

पुराणी चिन्मयी पुंसामादिः पुरुषरूपिणी ।
भूतान्तरात्मा कूटस्था महापुरुषसंज्ञिता ॥ १२।७६॥

जन्ममृत्युजरातीता सर्वशक्तिसमन्विता ।
व्यापिनी चानवच्छिन्ना प्रधानानुप्रवेशिनी ॥ १२।७७॥

क्षेत्रज्ञशक्तिरव्यक्तलक्षणा मलवर्जिता ।
अनादिमायासंभिन्ना त्रितत्त्वा प्रकृतिग्रहा ॥ १२।७८॥

महामायासमुत्पन्ना तामसी पौरुषी ध्रुवा ।
व्यक्ताव्यक्तात्मिका कृष्णा रक्ता शुक्ला प्रसूतिका ॥ १२।७९॥

अकार्या कार्यजननी नित्यं प्रसवधर्मिणी ।
सर्गप्रलयनिर्मुक्ता सृष्टिस्थित्यन्तधर्मिणी ॥ १२।८०॥

ब्रह्मगर्भा चतुर्विंशा पद्मनाभाऽच्युतात्मिका ।
वैद्युती शाश्वती योनिर्जगन्मातेश्वरप्रिया ॥ १२।८१॥

सर्वाधारा महारूपा सर्वैश्वर्यसमन्विता ।
विश्वरूपा महागर्भा विश्वेशेच्छानुवर्तिनी ॥ १२।८२॥

महीयसी ब्रह्मयोनिः महालक्ष्मीसमुद्भवा
महाविमानमध्यस्था महानिद्रात्महेतुका ॥ १२।८३॥

सर्वसाधारणी सूक्ष्मा ह्यविद्या पारमार्थिका ।
अनन्तरूपाऽनन्तस्था देवी पुरुषमोहिनी ॥ १२।८४॥

अनेकाकारसंस्थाना कालत्रयविवर्जिता ।
ब्रह्मजन्मा हरेर्मूर्तिर्ब्रह्मविष्णुशिवात्मिका ॥ १२।८५॥

ब्रह्मेशविष्णुजननी ब्रह्माख्या ब्रह्मसंश्रया ।
व्यक्ता प्रथमजा ब्राह्मी महती ज्ञानरूपिणी ॥ १२।८६॥

वैराग्यैश्वर्यधर्मात्मा ब्रह्ममूर्तिर्हृदिस्थिता ।
अपांयोनिः स्वयंभूतिर्मानसी तत्त्वसंभवा ॥ १२।८७॥

ईश्वराणी च शर्वाणी शंकरार्द्धशरीरिणी ।
भवानी चैव रुद्राणी महालक्ष्मीरथाम्बिका ॥ १२।८८॥

महेश्वरसमुत्पन्ना भुक्तिमुक्तिफलप्रदा ।
सर्वेश्वरी सर्ववन्द्या नित्यं मुदितमानसा ॥ १२।८९॥

ब्रह्मेन्द्रोपेन्द्रनमिता शंकरेच्छानुवर्तिनी ।
ईश्वरार्द्धासनगता महेश्वरपतिव्रता ॥ १२।९०॥

सकृद्विभाता सर्वार्ति समुद्रपरिशोषिणी ।
पार्वती हिमवत्पुत्री परमानन्ददायिनी ॥ १२।९१॥

गुणाढ्या योगजा योग्या ज्ञानमूर्तिर्विकासिनी ।
सावित्रीकमला लक्ष्मीः श्रीरनन्तोरसि स्थिता ॥ १२।९२॥

सरोजनिलया मुद्रा योगनिद्रा सुरार्दिनी ।
सरस्वती सर्वविद्या जगज्ज्येष्ठा सुमङ्गला ॥ १२।९३॥

वाग्देवी वरदा वाच्या कीर्तिः सर्वार्थसाधिका ।
योगीश्वरी ब्रह्मविद्या महाविद्या सुशोभना ॥ १२।९४॥

गुह्यविद्यात्मविद्या च धर्मविद्यात्मभाविता ।
स्वाहा विश्वंभरा सिद्धिः स्वधा मेधा धृतिः श्रुतिः ॥ १२।९५॥

नीतिः सुनीतिः सुकृतिर्माधवी नरवाहिनी ।
पूज्या विभावरी सौम्या भोगिनी भोगशायिनी ॥ १२।९६॥

शोभा वंशकरी लोला मालिनी परमेष्ठिनी ।
त्रैलोक्यसुन्दरी रम्या सुन्दरी कामचारिणी ॥ १२।९७॥

महानुभावा सत्त्वस्था महामहिषमर्दिनी ।
पद्ममाला पापहरा विचित्रा मुकुटानना ॥ १२।९८॥

कान्ता चित्राम्बरधरा दिव्याबरणभूषिता ।

हंसाख्या व्योमनिलया जगत्सृष्टिविवर्द्धिनी ॥ १२।९९॥

निर्यन्त्रा यन्त्रवाहस्था नन्दिनी भद्रकालिका ।
आदित्यवर्णा कौमारी मयूरवरवाहना ॥ १२।१००॥

वृषासनगता गौरी महाकाली सुरार्चिता ।
अदितिर्नियता रौद्रा पद्मगर्भा विवाहना ॥ १२।१०१॥

विरूपाक्षी लेलिहाना महापुरनिवासिनी ।
महाफलाऽनवद्याङ्गी कामरुपा विभावरी ॥ १२।१०२॥

विचित्ररत्नमुकुटा प्रणतार्तिप्रभञ्जनी ।
कौशिकी कर्षणी रात्रिस्त्रिदशार्तिविनाशिनी ॥ १२।१०३॥

बहुरूपा स्वरूपा च विरूपा रूपवर्जिता ।
भक्तार्तिशमनी भव्या भवभारविनाशनी ॥ १२।१०४॥

निर्गुणा नित्यविभवा निःसारा निरपत्रपा ।
यशस्विनी सामगीतिर्भवाङ्गनिलयालया ॥ १२।१०५॥

दीक्षा विद्याधरी दीप्ता महेन्द्रविनिपातिनी ।
सर्वातिशायिनी विश्वा सर्वसिद्धिप्रदायिनी ॥ १२।१०६॥

सर्वेश्वरप्रिया भार्या समुद्रान्तरवासिनी ।
अकलङ्का निराधारा नित्यसिद्धा निरामया ॥ १२।१०७॥

कामधेनुर्बृहद्गर्भा धीमती मोहनाशिनी ।
निःसङ्कल्पा निरातङ्का विनया विनयप्रिया ॥ १२।१०८॥

ज्वालामालासहस्राढ्या देवदेवी मनोमयी ।
महाभगवती भर्गा वासुदेवसमुद्भवा ॥ १२।१०९॥

महेन्द्रोपेन्द्रभगिनी भक्तिगम्या परावरा ।
ज्ञानज्ञेया जरातीता वेदान्तविषया गतिः ॥ १२।११०॥

दक्षिणा दहना माया सर्वभूतनमस्कृता ।
योगमाया विभागज्ञा महामोहा महीयसी ॥ १२।१११॥

संध्या सर्वसमुद्भूतिर्ब्रह्मवृक्षाश्रयानतिः ।
बीजाङ्कुरसमुद्भूतिर्महाशक्तिर्महामतिः ॥ १२।११२॥

ख्यातिः प्रज्ञा चितिः संच्चिन्महाभोगीन्द्रशायिनी ।
विकृतिः शांसरी शास्तिर्गणगन्धर्वसेविता ॥ १२।११३॥

वैश्वानरी महाशाला देवसेना गुहप्रिया ।
महारात्रिः शिवामन्दा शची दुःस्वप्ननाशिनी ॥ १२।११४॥

इज्या पूज्या जगद्धात्री दुर्विज्ञेया सुरूपिणी ।
तपस्विनी समाधिस्था त्रिनेत्रा दिवि संस्थिता ॥ १२।११५॥

गुहाम्बिका गुणोत्पत्तिर्महापीठा मरुत्सुता ।
हव्यवाहान्तरागादिः हव्यवाहसमुद्भवा ॥ १२।११६॥

जगद्योनिर्जगन्माता जन्ममृत्युजरातिगा ।
बुद्धिमाता बुद्धिमती पुरुषान्तरवासिनी ॥ १२।११७॥

तरस्विनी समाधिस्था त्रिनेत्रा दिविसंस्थिता ।
सर्वेन्द्रियमनोमाता सर्वभूतहृदि स्थिता ॥ १२।११८॥

संसारतारिणी विद्या ब्रह्मवादिमनोलया ।
ब्रह्माणी बृहती ब्राह्मी ब्रह्मभूता भवारणी ॥ १२।११९॥

हिरण्मयी महारात्रिः संसारपरिवर्त्तिका ।
सुमालिनी सुरूपा च भाविनी तारिणी प्रभा ॥ १२।१२०॥

उन्मीलनी सर्वसहा सर्वप्रत्ययसाक्षिणी ।
सुसौम्या चन्द्रवदना ताण्डवासक्तमानसा ॥ १२।१२१॥

सत्त्वशुद्धिकरी शुद्धिर्मलत्रयविनाशिनी ।
जगत्प्रिया जगन्मूर्तिस्त्रिमूर्तिरमृताश् ॥ १२।१२२॥

निराश्रया निराहारा निरङ्कुरवनोद्भवा ।
चन्द्रहस्ता विचित्राङ्गी स्रग्विणी पद्मधारिणी ॥ १२।१२३॥

परावरविधानज्ञा महापुरुषपूर्वजा ।
विद्येश्वरप्रिया विद्या विद्युज्जिह्वा जितश्रमा ॥ १२।१२४॥

विद्यामयी सहस्राक्षी सहस्रवदनात्मजा ।
सहस्ररश्मिः सत्त्वस्था महेश्वरपदाश्रया ॥ १२।१२५॥

क्षालिनी सन्मयी व्याप्ता तैजसी पद्मबोधिका ।
महामायाश्रया मान्या महादेवमनोरमा ॥ १२।१२६॥

व्योमलक्ष्मीः सिहरथा चेकितानामितप्रभा ।
वीरेश्वरी विमानस्था विशोकाशोकनाशिनी ॥ १२।१२७॥

अनाहता कुण्डलिनी नलिनी पद्मवासिनी ।
सदानन्दा सदाकीर्तिः सर्वभूताश्रयस्थिता ॥ १२।१२८॥

वाग्देवता ब्रह्मकला कलातीता कलारणी ।
ब्रह्मश्रीर्ब्रह्महृदया ब्रह्मविष्णुशिवप्रिया ॥ १२।१२९॥

व्योमशक्तिः क्रियाशक्तिर्ज्ञानशक्तिः परागतिः ।
क्षोभिका बन्धिका भेद्या भेदाभेदविवर्जिता ॥ १२।१३०॥

अभिन्नाभिन्नसंस्थाना वंशिनी वंशहारिणी ।
गुह्यशक्तिर्गुणातीता सर्वदा सर्वतोमुखी ॥ १२।१३१॥

भगिनी भगवत्पत्नी सकला कालकारिणी ।
सर्ववित् सर्वतोभद्रा गुह्यातीता गुहावलिः ॥ १२।१३२॥

प्रक्रिया योगमाता च गङ्गा विश्वेश्वरेश्वरी ।
कपिला कापिला कान्ताकनकाभाकलान्तरा ॥ १२।१३३॥

पुण्या पुष्करिणी भोक्त्री पुरंदरपुरस्सरा ।
पोषणी परमैश्वर्यभूतिदा भूतिभूषणा ॥ १२।१३४॥

पञ्चब्रह्मसमुत्पत्तिः परमार्थार्थविग्रहा ।
धर्मोदया भानुमती योगिज्ञेय मनोजवा ॥ १२।१३५॥

मनोहरा मनोरस्था तापसी वेदरूपिणी ।
वेदशक्तिर्वेदमाता वेदविद्याप्रकाशिनी ॥ १२।१३६॥

योगेश्वरेश्वरी माता महाशक्तिर्मनोमयी ।

विश्वावस्था वियन्मूर्तिर्विद्युन्माला विहायसी ॥ १२।१३७॥

किंनरी सुरभिर्वन्द्या नन्दिनी नन्दिवल्लभा ।
भारती परमानन्दा परापरविभेदिका ॥ १२।१३८॥

सर्वप्रहरणोपेता काम्या कामेश्वरेश्वरी ।
अचिन्त्याऽचिन्त्यविभवा हृल्लेखा कनकप्रभा १२।१३९॥

कूष्माण्डी धनरत्नाढ्या सुगन्धा गन्धायिनी ।
त्रिविक्रमपदोद्भूता धनुष्पाणिः शिवोदया ॥ १२।१४०॥

सुदुर्लभा धनाद्यक्षा धन्या पिङ्गललोचना ।
शान्तिः प्रभावती दीप्तिः पङ्कजायतलोचना ॥ १२।१४१॥

आद्या हृत्कमलोद्भूता गवां मता रणप्रिया ।
सत्क्रिया गिरिजा शुदिर्नित्यपुष्टा निरन्तरा ॥ १२।१४२॥

दुर्गाकात्यायनीचण्डी चर्चिका शान्तविग्रहा ।
हिरण्यवर्णा रजनी जगद्यन्त्रप्रवर्तिका ॥ १२।१४३॥

मन्दराद्रिनिवासा च शारदा स्वर्णमालिनी ।
रत्नमाला रत्नगर्भा पृथ्वी विश्वप्रमाथिनी ॥ १२।१४४॥

पद्मानना पद्मनिभा नित्यतुष्टाऽमृतोद्भवा ।
धुन्वती दुःप्रकम्पा च सूर्यमाता दृषद्वती ॥ १२।१४५॥

महेन्द्रभगिनी मान्या वरेण्या वरदयिका ।
कल्याणी कमलावासा पञ्चचूडा वरप्रदा ॥ १२।१४६॥

वाच्या वरेश्वरी वन्द्या दुर्जया दुरतिक्रमा ।
कालरात्रिर्महावेगा वीरभद्रप्रिया हिता ॥ १२।१४७॥

भद्रकाली जगन्माता भक्तानां भद्रदायिनी ।
कराला पिङ्गलाकारा कामभेदाऽमहामदा ॥ १२।१४८॥

यशस्विनी यशोदा च षडध्वपरिवर्त्तिका ।
शङ्खिनी पद्मिनी सांख्या सांख्ययोगप्रवर्तिका ॥ १२।१४९॥

चैत्रा संवत्सरारूढा जगत्सम्पूरणीध्वजा ।
शुम्भारिः खेचरीस्वस्था कम्बुग्रीवाकलिप्रिया ॥ १२।१५०॥

खगध्वजा खगारूढा परार्या परमालिनी ।
ऐश्वर्यपद्मनिलया विरक्ता गरुडासना ॥ १२।१५१॥

जयन्ती हृद्गुहा गम्या गह्वरेष्ठा गणाग्रणीः ।
संकल्पसिद्धा साम्यस्था सर्वविज्ञानदायिनी ॥ १२।१५२॥

कलिकल्पविहन्त्री च गुह्योपनिषदुत्तमा ।
निष्ठा दृष्टिः स्मृतिर्व्याप्तिः पुष्टिस्तुष्टिः क्रियावती ॥ १२।१५३॥

विश्वामरेश्वरेशाना भुक्तिर्मुक्तिः शिवाऽमृता ।
लोहिता सर्पमाला च भीषणी वनमालिनी ॥ १२।१५४॥

अनन्तशयनाऽनन्ता नरनारायणोद्भवा ।
नृसिंही दैत्यमथनी शङ्खचक्रगदाधरा ॥ १२।१५५॥

संकर्षणसमुत्पत्तिरम्बिकापादसंश्रया ।
महाज्वाला महामूर्त्तिः सुमूर्त्तिः सर्वकामधुक् ॥ १२।१५६॥

सुप्रभा सुस्तना सौरी धर्मकामार्थमोक्षदा ।
भ्रूमध्यनिलया पूर्वा पुराणपुरुषारणिः ॥ १२।१५७॥

महाविभूतिदा मध्या सरोजनयना समा ।
अष्टादशभुजानाद्या नीलोत्पलदलप्रभ१२।१५८॥

सर्वशक्त्यासनारूढा सर्वधर्मार्थवर्जिता ।
वैराग्यज्ञाननिरता निरालोका निरिन्द्रिया ॥ १२।१५९॥

विचित्रगहनाधारा शाश्वतस्थानवासिनी ।
स्थानेश्वरी निरानन्दा त्रिशूलवरधारिणी ॥ १२।१६०॥

अशेषदेवतामूर्त्तिर्देवता वरदेवता ।
गणाम्बिका गिरेः पुत्री निशुम्भविनिपातिनी ॥ १२।१६१॥

अवर्णा वर्णरहिता त्रिवर्णा जीवसंभवा ।
अनन्तवर्णाऽनन्यस्था शंकरी शान्तमानसा ॥ १२।१६२॥

अगोत्रा गोमती गोप्त्री गुह्यरूपा गुणोत्तरा ।
गौर्गीर्गव्यप्रिया गौणी गणेश्वरनमस्कृता ॥ १२।१६३॥

सत्यमाता सत्यसंधा त्रिसंध्या संधिवर्जिता ।
सर्ववादाश्रया सांख्या सांख्ययोगसमुद्भवा ॥ १२।१६४॥

असंख्येयाऽप्रमेयाख्या शून्या शुद्धकुलोद्भवा ।
बिन्दुनादसमुत्पत्तिः शंभुवामा शशिप्रभा ॥ १२।१६५॥

पिषङ्गा भेदरहिता मनोज्ञा मधुसूदनी ।
महाश्रीः श्रीसमुत्पत्तिस्तमःपारे प्रतिष्ठिता ॥ १२।१६६॥

त्रितत्त्वमाता त्रिविधा सुसूक्ष्मपदसंश्रया ।
शन्ता भीता मलातीता निर्विकारा निराश्रया ॥ १२।१६७॥

शिवाख्या चित्तनिलया शिवज्ञानस्वरूपिणी ।
दैत्यदानवनिर्मात्री काश्यपी कालकर्णिका ॥ १२।१६८॥

शास्त्रयोनिः क्रियामूर्तिश्चतुर्वर्गप्रदर्शिका ।
नारायणी नरोद्भूतिः कौमुदी लिङ्गधारिणी ॥ १२।१६९॥

कामुकी ललिताभावा परापरविभूतिदा ।
परान्तजातमहिमा बडवा वामलोचना ॥ १२।१७०॥

सुभद्रा देवकी सीता वेदवेदाङ्गपारगा ।
मनस्विनी मन्युमाता महामन्युसमुद्भवा ॥ १२।१७१॥

अमृत्युरमृतास्वादा पुरुहूता पुरुष्टुता ।
अशोच्या भिन्नविषया हिरण्यरजतप्रिया ॥ १२।१७२॥

हिरण्या राजती हैमा हेमाभरणभूषिता ।
विभ्राजमाना दुर्ज्ञेया ज्योतिष्टोमफलप्रदा ॥ १२।१७३॥

महानिद्रासमुद्भूतिरनिद्रा सत्यदेवता ।
दीर्घाककुद्मिनी हृद्या शान्तिदा शान्तिवर्द्धिनी ॥ १२।१७४॥

लक्ष्म्यादिशक्तिजननी शक्तिचक्रप्रवर्तिका ।

त्रिशक्तिजननी जन्या षडूर्मिपरिवर्जिता ॥ १२।१७५॥

सुधामा कर्मकरणी युगान्तदहनात्मिका ।
संकर्षणी जगद्धात्री कामयोनिः किरीटिनी ॥ १२।१७६॥

ऐन्द्री त्रैलोक्यनमिता वैष्णवी परमेश्वरी ।
प्रद्युम्नदयिता दात्री युग्मदृष्टिस्त्रिलोचना ॥ १२।१७७॥

मदोत्कटा हंसगतिः प्रचण्डा चण्डविक्रमा ।
वृषावेशा वियन्माता विन्ध्यपर्वतवासिनी ॥ १२।१७८॥

हिमवन्मेरुनिलया कैलासगिरिवासिनी ।
चाणूरहन्तृतनया नीतिज्ञा कामरूपिणी ॥ १२।१७९॥

वेदविद्याव्रतस्नाता धर्मशीलाऽनिलाशना ।
वीरभद्रप्रिया वीरा महाकामसमुद्भवा ॥ १२।१८०॥

विद्याधरप्रिया सिद्धा विद्याधरनिराकृतिः ।
आप्यायनी हरन्ती च पावनी पोषणी कला ॥ १२।१८१॥

मातृका मन्मथोद्भूता वारिजा वाहनप्रिया ।
करीषिणी सुधावाणी वीणावादनतत्परा ॥ १२।१८२॥

सेविता सेविका सेव्या सिनीवाली गरुत्मती ।
अरुन्धती हिरण्याक्षी मृगांका मानदायिनी ॥ १२।१८३॥

वसुप्रदा वसुमती वसोर्द्धारा वसुंधरा ।
धाराधरा वरारोहा वरावरसहस्रदा ॥ १२।१८४॥

श्रीफला श्रीमती श्रीशा श्रीनिवासा शिवप्रिया ।
श्रीधरा श्रीकरी कल्या श्रीधरार्द्धशरीरिणी ॥ १२।१८५॥

अनन्तदृष्टिरक्षुद्रा धात्रीशा धनदप्रिया ।
निहन्त्री दैत्यसङ्घानां सिहिका सिहवाहना ॥ १२।१८६॥

सुषेणा चन्द्रनिलया सुकीर्तिश्छिन्नसंशया ।
रसज्ञा रसदा रामा लेलिहानामृतस्रवा ॥ १२।१८७॥

नित्योदिता स्वयंज्योतिरुत्सुका मृतजीवना ।
वज्रदण्डा वज्रजिह्वा वैदेही वज्रविग्रहा ॥ १२।१८८॥

मङ्गल्या मङ्गला माला मलिना मलहारिणी ।
गान्धर्वी गारुडी चान्द्री कम्बलाश्वतरप्रिया ॥ १२।१८९॥

सौदामिनी जनानन्दा भ्रुकुटीकुटिलानना ।
कर्णिकारकरा कक्ष्या कंसप्राणापहारिणी ॥ १२।१९०॥

युगंधरा युगावर्त्ता त्रिसंध्या हर्षवर्द्धनी ।
प्रत्यक्षदेवता दिव्या दिव्यगन्धा दिवा परा ॥ १२।१९१॥

शक्रासनगता शाक्री सान्ध्या चारुशरासना ।
इष्टा विशिष्टा शिष्टेष्टा शिष्टाशिष्टप्रपूजिता ॥ १२।१९२॥

शतरूपा शतावर्त्ता विनता सुरभिः सुरा ।
सुरेन्द्रमाता सुद्युम्ना सुषुम्ना सूर्यसंस्थिता ॥ १२।१९३॥

समीक्ष्या सत्प्रतिष्ठा च निवृत्तिर्ज्ञानपारगा ।
धर्मशास्त्रार्थकुशला धर्मज्ञा धर्मवाहना ॥ १२।१९४॥

धर्माधर्मविनिर्मात्री धार्मिकाणां शिवप्रदा ।
धर्मशक्तिर्धर्ममयी विधर्मा विश्वधर्मिणी ॥ १२।१९५॥

धर्मान्तरा धर्ममयी धर्मपूर्वा धनावहा ।
धर्मोपदेष्ट्री धर्मत्मा धर्मगम्या धराधरा ॥ १२।१९६॥

कापाली शकला मूर्त्तिः कला कलितविग्रहा ।
सर्वशक्तिविनिर्मुक्ता सर्वशक्त्याश्रयाश्रया ॥ १२।१९७॥

सर्वा सर्वेश्वरी सूक्ष्मा सूक्ष्माज्ञानस्वरूपिणी ।
प्रधानपुरुषेशेषा महादेवैकसाक्षिणी ॥ १२।१९८॥

सदाशिवा वियन्मूर्त्तिर्विश्वमूर्त्तिरमूर्त्तिका ।
एवं नाम्नां सहस्रेण स्तुत्वाऽसौ हिमवान् गिरिः ॥ १२।१९९॥

भूयः प्रणम्य भीतात्मा प्रोवाचेदं कृताञ्जलिः ।
यदेतदैश्वरं रूपं घोरं ते परमेश्वरि ॥ १२।२००॥

भीतोऽस्मि साम्प्रतं दृष्ट्वा रूपमन्यत् प्रदर्शय ।
एवमुक्ताऽथ सा देवी तेन शैलेन पार्वती ॥ १२।२०१॥

संहृत्य दर्शयामास स्वरूपमपरं पुनः ।
नीलोत्पलदलप्रख्यं नीलोत्पलसुगन्धिकम् ॥ १२।२०२॥

द्विनेत्रं द्विभुजं सौम्यं नीलालकविभूषितम् ।
रक्तपादाम्बुजतलं सुरक्तकरपल्लवम् ॥ १२।२०३॥

श्रीमद्विशालसंवृत्तंललाटतिलकोज्ज्वलम् ।
भूषितं चारुसर्वाङ्गं भूषणैरतिकोमलम् ॥ १२।२०४॥

दधानमुरसा मालां विशालां हेमनिर्मिताम् ।
ईषत्स्मितं सुबिम्बोष्ठं नूपुरारावसंयुतम् ॥ १२।२०५॥

प्रसन्नवदनं दिव्यमनन्तमहिमास्पदम् ।
तदीदृशं समालोक्य स्वरूपं शैलसत्तमः ॥ १२।२०६॥

भीतिं संत्यज्य हृष्टात्मा बभाषे परमेश्वरीम् ।
हिमवानुवाच
अद्य मे सफलं जन्म अद्य मे सफलं तपः ॥ १२।२०७॥

यन्मे साक्षात्त्वमव्यक्ता प्रसन्ना दृष्टिगोचरा ।
त्वया सृष्टं जगत् सर्वं प्रधानाद्यं त्वयि स्थितम् ॥ १२।२०८॥

त्वय्येव लीयते देवि त्वमेव च परा गतिः ।
वदन्ति केचित् त्वामेव प्रकृतिं प्रकृतेः पराम् ॥ १२।२०९॥

अपरे परमार्थज्ञाः शिवेति शिवसंश्रयात् ।
त्वयि प्रधानं पुरुषो महान् ब्रह्मा तथेश्वरः ॥ १२।२१०॥

अविद्या नियतिर्माया कलाद्याः शतशोऽभवन् ।
त्वं हि सा परमा शक्तिरनन्ता परमेष्ठिनी ॥ १२।२११॥

सर्वभेदविनिर्मुक्ता सर्वभेदाश्रयाश्रया ।
त्वामधिष्ठाय योगेशि महादेवो महेश्वरः ॥ १२।२१२॥

प्रधानाद्यं जगत् कृत्स्नं करोति विकरोति च ।
त्वयैव संगतो देवः स्वमानन्दं समश्नुते ॥ १२।२१३॥

त्वमेव परमानन्दस्त्वमेवानन्ददायिनी ।
त्वमक्षरं परं व्योम महज्ज्योतिर्निरञ्जनम् ॥ १२।२१४॥

शिवं सर्वगतं सूक्ष्मं परं ब्रह्म सनातनम् ।
त्वं शक्रः सर्वदेवानां ब्रह्मा ब्रह्मविदामसि ॥ १२।२१५॥

वायुर्बलवतां देवि योगिनां त्वं कुमारकः ।
ऋषीणां च वसिष्ठस्त्वं व्यासो वेदविदामसि ॥ १२।२१६॥

सांख्यानां कपिलो देवो रुद्राणामसि शंकरः ।
आदित्यानामुपेन्द्रस्त्वं वसूनां चैव पावकः ॥ १२।२१७॥

वेदानां सामवेदस्त्वं गायत्री छन्दसामसि ।
अध्यात्मविद्या विद्यानां गतीनां परमा गतिः ॥ १२।२१८॥

माया त्वं सर्वशक्तीनां कालः कलयतामसि ।
ओङ्कारः सर्वगुह्यानां वर्णानां च द्विजात्तमः ॥ १२।२१९॥

आश्रमाणां च गार्हस्थ्यमीश्वराणां महेश्वरः ।
पुंसां त्वमेकः पुरुषः सर्वभूतहृदि स्थितः ॥ १२।२२०॥

सर्वोपनिषदां देवि गुह्योपनिषदुच्यते ।
ईशानश्चासि कल्पानां युगानां कृतमेव च ॥ १२।२२१॥

आदित्यः सर्वमार्गाणां वाचां देवि सरस्वती ।
त्वं लक्ष्मीश्चारुरूपाणां विष्णुर्मायाविनामसि ॥ १२।२२२॥

अरुन्धती सतीनां त्वं सुपर्णः पततामसि ।
सूक्तानां पौरुषं सूक्तं साम ज्येष्टं च सामसु ॥ १२।२२३॥

सावित्री चासि जाप्यानां यजुषां शतरुद्रियम् ।
पर्वतानां महामेरुरनन्तो भोगिनामसि ॥ १२।२२४॥

सर्वेषां त्वं परं ब्रह्म त्वन्मयं सर्वमेव हि ॥ १२।२२५॥

रूपं तवाशेषकलाविहीन-
मगोचरं निर्मलमेकरूपम् ।
अनादिमध्यान्तमनन्तामाद्यं
नमामि सत्यं तमसः परस्तात् ॥ १२।२२६॥

यदेव पश्यन्ति जगत्प्रसूतिं
वेदान्तविज्ञानविनिश्चितार्थाः ।
आनन्दमात्रं प्रणवाभिधानं
तदेव रूपं शरणं प्रपद्ये ॥ १२।२२७॥

अशेषभूतान्तरसन्निविष्टं
प्रधानपुंयोगवियोगहेतुम् ।
तेजोमयं जन्मविनाशहीनं
प्राणाभिधानं प्रणतोऽस्मि रूपम् ॥ १२।२२८॥

आद्यन्तहीनं जगदात्मभूतं
विभिन्नसंस्थं प्रकृतेः परस्तात् ।
कूटस्थमव्यक्तवपुस्तथैव
नमामि रूपं पुरुषाभिधानम् ॥ १२।२२९॥

सर्वाश्रयं सर्वजगद्विधानं
सर्वत्रगं जन्मविनाशहीनम् ।
सूक्ष्मं विचित्रं त्रिगुणं प्रधानं
नतोऽस्मि ते रूपमरूपभेदम् ॥ १२।२३०॥

आद्यं महान्तं पुरुषात्मरूपं
प्रकृत्यवस्थं त्रिगुणात्मबीजम् ।
ऐश्वर्यविज्ञानविरागधर्मैः
समन्वितं देवि नतोऽस्मि रूपम् ॥ १२।२३१॥

द्विसप्तलोकात्मकमम्बुसंस्थं
विचित्रभेदं पुरुषैकनाथम् ।
अनन्तभूतैरधिवासितं ते
नतोऽस्मि रूपं जगदण्डसंज्ञम् ॥ १२।२३१॥

अशेषवेदात्मकमेकमाद्यं
स्वतेजसा पूरितलोकभेदम् ।
त्रिकालहेतुं परमेष्ठिसंज्ञं

नमामि रूपं रविमण्डलस्थम् ॥ १२।२३२॥

सहस्रमूर्धानमनन्तशक्तिं
सहस्रबाहुं पुरुषं पुराणम् ।
शयानमन्तः सलिले तथैव
नारायणाख्यं प्रणतोऽस्मि रूपम् ॥ १२।२३३॥

दंष्ट्राकरालं त्रिदशाभिवन्द्यं
युगान्तकालानलकल्परूपम् ।
अशेषभूताण्डविनाशहेतुं
नमामि रूपं तव कालसंज्ञम् ॥ १२।२३४॥

फणासहस्रेण विराजमानं
भोगीन्द्रमुख्यैरभिपूज्यमानम् ।
जनार्दनारूढतनुं प्रसुप्तं
नतोऽस्मि रूपं तव शेषसंज्ञम् ॥ १२।२३५॥

अव्याहतैश्वर्यमयुग्मनेत्रं
ब्रह्मामृतानन्दरसज्ञमेकम् ।
युगान्तशेषं दिवि नृत्यमानं
नतोऽस्मि रूपं तव रुद्रसंज्ञम् ॥ १२।२३६॥

प्रहीणशोकं विमलं पवित्रं
सुरासुरैरर्चितापादपद्मम् ।
सुकोमलं देवि विभासि शुभ्रं
नमामि ते रूपमिदं भवानि ॥ १२।२३७॥

ॐ नमस्तेऽस्तु महादेवि नमस्ते परमेश्वरि ।
नमो भगवतीशानि शिवायै ते नमो नमः ॥ १२।२३८॥

त्वन्मयोऽहं त्वदाधारस्त्वमेव च गतिर्मम ।
त्वामेव शरणं यास्ये प्रसीद परमेश्वरि ॥ १२।२३९॥

मया नास्ति समो लोके देवो वा दानवोऽपि वा ।
जगन्मातैव मत्पुत्री संभूता तपसा यतः ॥ १२।२४०॥

एषा तवाम्बिका देवि किलाभूत्पितृकन्यका ।
मेनाऽशेषजगन्मातुरहो पुण्यस्य गौरवम् ॥ १२।२४१॥

पाहि माममरेशानि मेनया सह सर्वदा ।
नमामि तव पादाब्जं व्रजामि शरणं शिवाम् ॥ १२।२४२॥

अहो मे सुमहद् भाग्यं महादेवीसमागमात् ।
आज्ञापय महादेवि किं करिष्यामि शंकरि ॥ १२।२४३॥

एतावदुक्त्वा वचनं तदा हिमगिरीश्वरः ।
सम्प्रेक्षमाणो गिरिजां प्राञ्जलिः पार्श्वतोऽभवत् ॥ १२।२४४॥

अथ सा तस्य वचनं निशम्य जगतोऽरणिः ।
सस्मितं प्राह पितरं स्मृत्वा पशुपतिं पतिम् ॥ १२।२४६॥

देव्युवाच
शृणुष्व चैतत् प्रथमं गुह्यमीश्वरगोचरम् ।
उपदेशं गिरिश्रेष्ठ सेवितं ब्रह्मवादिभिः ॥ १२।२४७॥

यन्मे साक्षात् परं रूपमैश्वरं दृष्टमद्भुतम् ।
सर्वशक्तिसमायुक्तमनन्तं प्रेरकं परम् ॥ १२।२४८॥

शान्तः समाहितमना दम्भाहंकारवर्जितः ।
तन्निष्ठस्तत्परो भूत्वा तदेव शरणं व्रज ॥ १२।२४९॥

भक्त्या त्वनन्यया तात पद्भावं परमाश्रितः ।
सर्वयज्ञतपोदानैस्तदेवार्च्चय सर्वदा ॥ १२।२५०॥

तदेव मनसा पश्य तद् ध्यायस्व यजस्व च ।
ममोपदेशात्संसारं नाशयामि तवानघ ॥ १२।२५१॥

अहं वै मत्परान् भक्तानैश्वरं योगमास्थितान् ।
संसारसागरादस्मादुद्धराम्यचिरेण तु ॥ १२।२५२॥

ध्यानेन कर्मयोगेन भक्त्या ज्ञानेन चैव हि ।
प्राप्याऽहं ते गिरिश्रेष्ठ नान्यथा कर्मकोटिभिः ॥ १२।२५३॥

श्रुतिस्मृत्युदितं सम्यक् कर्म वर्णाश्रमात्मकम् ।
अध्यात्मज्ञानसहितं मुक्तये सततं कुरु ॥ १२।२५४॥

धर्मात्संजायते भक्तिर्भक्त्या सम्प्राप्यते परम् ।
श्रुतिस्मृतिभ्यामुदितो धर्मो यज्ञादिको मतः ॥ १२।२५५॥

नान्यतो जायते धर्मो वेदाद् धर्मो हि निर्बभौ ।
तस्मान्मुमुक्षुर्धर्मार्थी मद्रूपं वेदमाश्रयेत् ॥ १२।२५६॥

ममैवैषा परा शक्तिर्वेदसंज्ञा पुरातनी ।
ऋग्यजुः सामरूपेण सर्गादौ सम्प्रवर्त्तते ॥ १२।२५७॥

तेषामेव च गुप्त्यर्थं वेदानां भगवानजः ।
ब्राह्मणादीन् ससर्जाथ स्वे स्वे कर्मण्ययोजयत् ॥ १२।२५८॥

ये न कुर्वन्ति तद् धर्मं तदर्थं ब्रह्मनिर्मिताः ।
तेषामधस्ताद् नरकांस्तामिस्त्रादीनकल्पयत् ॥ १२।२५९॥

न च वेदादृते किञ्चिच्छास्त्रं धर्माभिधायकम् ।
योऽन्यत्ररमतेसोऽसौ न संभाष्यो द्विजातिभिः ॥ १२।२६०॥

यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानितु ।
श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि तामसी ॥ १२।२६१॥

कापालं पञ्चरात्रं च यामलं वाममार्हतम् ।
एवंविधानि चान्यानि मोहनार्थानि तानि तु ॥ १२।२६२॥

ये कुशास्त्राभियोगेन मोहयन्तीह मानवान् ।
मया सृष्टानि शास्त्राणि मोहायैषां भवान्तरे ॥ १२।२६३॥

वेदार्थवित्तमैः कार्यं यत् स्मृतं कर्म वैदिकम् ।
तत्प्रयत्नेन कुर्वन्ति मत्प्रियास्ते हि ये नराः ॥ १२।२६४॥

वर्णानामनुकम्पार्थं मन्नियोगाद्विराट् स्वयम् ।
स्वायंभुवो मनुर्धार्मान् मुनीनां पूर्वमुक्तवान् ॥ १२।२६५॥

श्रुत्वा चान्येऽपि मुनयस्तन्मुखाद् धर्ममुत्तमम् ।
चक्रुर्धर्मप्रतिष्ठार्थं धर्मशास्त्राणि चैव हि ॥ १२।२६६॥

तेषु चान्तर्हितेष्वेवं युगान्तेषु महर्षयः ।
ब्रह्मणो वचनात्तानि करिष्यन्ति युगे युगे ॥ १२।२६७॥

अष्टादश पुराणानि व्यासेन कथितानि तु ।
नियोगाद् ब्रह्मणो राजंस्तेषु धर्मः प्रतिष्ठितः ॥ १२।२६८॥

अन्यान्युपपुराणानि तच्छिष्यैः कथितानि तु ।
युगे युगेऽत्र सर्वेषां कर्ता वै धर्मशास्त्रवित् ॥ १२।२६९॥

शिक्षा कल्पो व्याकरणं निरुक्तं छन्द एव च ।
ज्योतिः शास्त्रं न्यायविद्या मीमांसा चोपबृंहणम् ॥ १२।२७०॥

एवं चतुर्दशैतानि विद्यास्थानानि सत्तम ।
चतुर्वेदैः सहोक्तानि धर्मो नान्यत्र विद्यते ॥ १२।२७१॥

एवं पैतामहं धर्मं मनुव्यासादयः परम् ।
स्थापयन्ति ममादेशाद् यावदाभूतसम्प्लवम् ॥ १२।२७२॥

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥ १२।२७३॥

तस्मात् सर्वप्रयत्नेन धर्मार्थं वेदमाश्रयेत् ।
धर्मेण सहितं ज्ञानं परं ब्रह्म प्रकाशयेत् ॥ १२।२७४॥

ये तु सङ्गान् परित्यज्य मामेव शरणं गताः ।
उपासते सदा भक्त्या योगमैश्वरमास्थिताः ॥ १२।२७५॥

सर्वभूतदयावन्तः शान्ता दान्ता विमत्सराः ।
अमानिनो बुद्धिमन्तस्तापसाः शंसितव्रताः ॥ १२।२७६॥

मच्चित्ता मद्गतप्राणा मज्ज्ञानकथने रताः ।
संन्यासिनो गृहस्थाश्च वनस्था ब्रह्मचारिणः ॥ १२।२७७॥

तेषां नित्याभियुक्तानां मायातत्त्वं समुत्थितम् ।
नाशयामि तमः कृत्स्नं ज्ञानदीपेन मा चिरात् ॥ १२।२७८॥

ते सुनिर्धूततमसो ज्ञानेनैकेन मन्मयाः ।
सदानन्दास्तु संसारे न जायन्ते पुनः पुनः ॥ १२।२७९॥

तस्मात् सर्वप्रकारेण मद्भक्तो मत्परायणः ।

मामेवार्चय सर्वत्र मनसा शरणं गतः ॥ १२।२८०॥

अशक्तो यदि मे ध्यातुमैश्वरं रूपमव्ययम् ।
ततो मे सकलं रूपं कालाद्यं शरणं व्रज ॥ १२।२८१॥

यद्यत् स्वरूपं मे तात मनसो गोचरं तव ।
तन्निष्ठस्तत्परो भूत्वा तदर्चनपरो भव ॥ १२।२८२॥

यत्तु मे निष्कलं रूपं चिन्मात्रं केवलं शिवम् ।
सर्वोपाधिविनिर्मुक्तमनन्तममृतं परम् ॥ १२।२८३॥

ज्ञानेनैकेन तल्लभ्यं क्लेशेन परमं पदम् ।
ज्ञानमेव प्रपश्यन्तो मामेव प्रविशन्ति ते ॥ १२।२८४॥

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १२।२८५॥

मामनाश्रित्य परमं निर्वाणममलं पदम् ।
प्राप्यते न हि राजेन्द्र ततो मां शरणं व्रज ॥ १२।२८६॥

एकत्वेन पृथक्त्वेन तथा चोभयथापि वा ।
मामुपास्य महाराज ततो यास्यासि तत्पदम् ॥ १२।२८७॥

मामनाश्रित्य तत्तत्त्वं स्वभावविमलं शिवम् ।
ज्ञायते न हि राजेन्द्र ततो मां शरणं व्रज ॥ १२।२८८॥

तस्मात् त्वमक्षरं रूपं नित्यं चारूपमैश्वरम् ।
आराधय प्रयत्नेन ततो बन्धं प्रहास्यसि ॥ १२।२८९॥

कर्मणा मनसा वाचा शिवं सर्वत्र सर्वदा ।
समाराधय भावेन ततो यास्यसि तत्पदम् ॥ १२।२९०॥

न वै पश्यन्ति तत्तत्त्वं मोहिता मम मायया ।
अनाद्यनन्तं परमं महेश्वरमजं शिवम् ॥ १२।२९१॥

सर्वभूतात्मभूतस्थं सर्वाधारं निरञ्जनम् ।
नित्यानन्दं निराभासं निर्गुणं तमसः परम् ॥ १२।२९२॥

अद्वैतमचलं ब्रह्म निष्कलं निष्प्रपञ्चकम् ।
स्वसंवेद्यमवेद्यं तत् परे व्योम्नि व्यवस्थितम् ॥ १२।२९३॥

सूक्ष्मेण तमसा नित्यं वेष्टिता मम मायया ।
संसारसागरे घोरे जायन्ते च पुनः पुनः ॥ १२।२९४॥

भक्त्या त्वनन्यया राजन् सम्यग् ज्ञानेन चैव हि ।
अन्वेष्टव्यं हि तद् ब्रह्म जन्मबन्धनिवृत्तये ॥ १२।२९५॥

अहंकारं च मात्सर्यं कामं क्रोधपरिग्रहम् ।
अधर्माभिनिवेशं च त्यक्त्वा वैराग्यमास्थितः ॥ १२।२९६॥

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
अन्वीक्ष्य चात्मनात्मानं ब्रह्मभूयाय कल्पते ॥ १२।२९७॥

ब्रह्मभूतः प्रसन्नात्मा सर्वभूताभयप्रदः ।
ऐश्वरीं परमां भक्तिं विन्देतानन्यगामिनीम् ॥ १२।२९८॥

वीक्षते तत्परं तत्त्वमैश्वरं ब्रह्मनिष्कलम् ।
सर्वसंसारनिर्मुक्तो ब्रह्मणेयवावतिष्ठते ॥ १२।२९९॥

ब्रह्मणो हि प्रतिष्ठाऽयं परस्य परमः शिवः ।
अनन्यश्चाव्ययस्चैकश्चात्माधारो महेश्वरः ॥ १२।३००॥

ज्ञानेन कर्मयोगेन भक्तियोगेन वा नृप ।
सर्वसंसारमुक्त्यर्थमीश्वरं शरणं व्रज ॥ १२।३०१॥

एष गुह्योपदेशस्ते मया दत्तो गिरीश्वर ।
अन्वीक्ष्य चैतदखिलं यथेष्टं कर्तुमर्हसि ॥ १२।३०२॥

अहं वै याचिता देवैः संजाता परमेश्वरात् ।
विनिन्द्य दक्षं पितरं महेश्वरविनिन्दकम् ॥ १२।३०३॥

धर्मसंस्थापनार्थाय तवाराधनकारणात् ।
मेनादेहसमुत्पन्ना त्वामेव पितरं श्रिता ॥ १२।३०४॥

स त्वं नियोगाद्देवस्य ब्रह्मणः परमात्मनः ।
प्रदास्यसे मां रुद्राय स्वयंवरसमागमे ॥ १२।३०५॥

तत्संबन्धाच्च ते राजन् सर्वे देवाः सवासवाः ।
त्वां नमस्यन्ति वै तात प्रसीदति च शंकरः ॥ १२।३०६॥

तस्मात्सर्वप्रयत्नेन मां विद्धीश्वरगोचराम् ।
सम्पूज्य देवमीशानं शरण्यं शरणं व्रज ॥ १२।३०७॥

स एवमुक्तो भगवान् देवदेव्या गिरीश्वरः ।
प्रणम्य शिरसा देवीं प्राञ्जलिः पुनरब्रवीत् ॥ १२।३०८॥

विस्तरेण महेशानि योगं माहेश्वरं परम् ।
ज्ञानं वै चात्मनो योगं साधनानि प्रचक्ष्व मे ॥ १२।३०९॥

तस्यैतत् परमं ज्ञानमात्मयोगमुत्तमम् ।
यथावद् व्याजहारेशासाधनानिच विस्तरात् ॥ १२।३१०॥

निशम्य वदनाम्भोजाद् गिरीन्द्रो लोकपूजितः ।
लोकमातुः परं ज्ञानं योगासक्तोऽभवत्पुनः ॥ १२।३११॥

प्रददौ च महेशाय पार्वतीं भाग्यगौरवात् ।
नियोगाद्ब्रह्मणः साध्वीं देवानां चैव संनिधौ ॥ १२।३१२॥

य इमं पठतेऽध्यायं देव्या माहात्म्यकीर्तनम् ।
शिवस्य संनिधौ भक्त्या सुचिस्तद्भावभावितः ॥ १२।३१३॥

सर्वपापविनिर्मुक्तो दिव्ययोगसमन्वितः ।
उल्लङ्घ्य ब्रह्मणो लोकं देव्याः स्थानमवाप्नुयात् ॥ १२।३१४॥

यश्चैतत् पठति स्तोत्रं ब्राह्मणानां समीपतः ।
समाहितमनाः सोऽपि सर्वपापैः प्रमुच्यते ॥ १२।३१५॥

नाम्नामष्टसहस्रं तु देव्या यत् समुदीरितम् ।
ज्ञात्वाऽर्कमण्डलगतां संभाव्य परमेश्वरीम् ॥ १२।३१६॥

अभ्यर्च्य गन्धपुष्पाद्यैर्भक्तियोगसमन्वितः ।
संस्मरन्परमं भावं देव्या माहेश्वरं परम् ॥ १२।३१७॥

अनन्यमानसो नित्यं जपेदामरणाद् द्विजः ।

सोऽन्तकाले स्मृतिं लब्ध्वा परं ब्रह्माधिगच्छति ॥ १२।३१८॥

अथवा जायते विप्रो ब्राह्मणानां कुले शुचौ ।
पूर्वसंस्कारमाहात्म्याद् ब्रह्मविद्यामवाप्नुयात् ॥ १२।३१९॥

सम्प्राप्य योगं परमं दिव्यं तत् पारमेश्वरम् ।
शान्तः सर्वगातो भूत्वा शिवसायुज्यमाप्नुयात् ॥ १२।३२०॥

प्रत्येकं चाथ नामानि जुहुयात् सवनत्रयम् ।
पूतनादिकृतैर्दोषैर्ग्रहदोषैश्च मुच्यते ॥ १२।३२१॥

जपेद् वाऽहरहर्नित्यं संवत्सरमतन्द्रितः ।
श्रीकामः पार्वतीं देवीं पूजयित्वा विधानतः ॥ १२।३२२॥

सम्पूज्य पार्श्वतः शंभुं त्रिनेत्रं भक्तिसंयुतः ।
लभते महतीं लक्ष्मीं महादेवप्रसादतः ॥ १२।३२३॥

तस्मात् सर्वप्रयत्नेन जप्तव्यं हि द्विजातिभिः ।
सर्वपापापनोदार्थं देव्या नाम सहस्रकम् ॥ १२।३२४॥

प्रसङ्गात् कथितं विप्रा देव्या माहात्म्यमुत्तमम् ।
अतः परं प्रजासर्गं भृग्वादीनां निबोधत ॥ १२।३२५॥

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे
द्वादशोऽध्यायः ॥१२॥

श्रीदेवीसहस्रनामस्तोत्रम् कूर्मपुराणान्तर्गतम्

ऋषयः ऊचुः --
कैषा भगवती देवी शंकरार्धशरीरिणी ।
शिवा सती हैमवती यथावद्ब्रूहि पृच्छताम् ॥ १॥

तेषां तद्वचनं श्रुत्वा मुनीनां पुरुषोत्तमः ।
प्रत्युवाच महायोगी ध्यात्वा स्वं परमं पदम् ॥ २॥

श्रीकूर्म उवाच --
पुरा पितामहेनोक्तं मेरुपृष्ठे सुशोभनम् ।
रहस्यमेतद् विज्ञानं गोपनीयं विशेषतः ॥ ३॥

सांख्यानां परमं सांख्यं ब्रह्मविज्ञानमुत्तमम् ।
संसारार्णवमग्नानां जन्तूनामेकमोचनम् ॥ ४॥

या सा माहेश्वरी शक्तिर्ज्ञानरूपाऽतिलालसा ।
व्योमसंज्ञा परा काष्ठा सेयं हैमवती मता ॥ ५॥

शिवा सर्वगताऽनन्ता गुणातीता सुनिष्कला ।
एकानेकविभागस्था ज्ञानरूपाऽतिलालसा ॥ ६॥

अनन्या निष्कले तत्त्वे संस्थिता तस्य तेजसा ।
स्वाभाविकी च तन्मूला प्रभा भानोरिवामला ॥ ७॥

एका माहेश्वरी शक्तिरनेकोपाधियोगतः ।
परावरेण रूपेण क्रीडते तस्य सन्निधौ ॥ ८॥

सेयं करोति सकलं तस्याः कार्यमिदं जगत् ।
न कार्यं नापि करणमीश्वरस्येति सूरयः ॥ ९॥

चतस्रः शक्तयो देव्याः स्वरूपत्वेन संस्थिताः ।
अधिष्ठानवशात्तस्याः शृणुध्वं मुनिपुङ्गवाः ॥ १०॥

शान्तिर्विद्या प्रतिष्ठा च निवृत्तिश्चेति ताः स्मृताः ।
चतुर्व्यूहस्ततो देवः प्रोच्यते परमेश्वरः ॥ ११॥

अनया परया देवः स्वात्मानन्दं समश्नुते ।

चतुर्ष्वपि च वेदेषु चतुर्मूर्तिर्महेश्वरः ॥ १२॥

अस्यास्त्वनादिसंसिद्धमैश्वर्यमतुलं महत् ।
तत्सम्बन्धादनन्तायाः रुद्रेण परमात्मना ॥ १३॥

सैषा सर्वेश्वरी देवी सर्वभूतप्रवर्तिका ।
प्रोच्यते भगवान् कालो हरिः प्राणो महेश्वरः ॥ १४॥

तत्र सर्वमिदं प्रोतमोत चैवाखिलं जगत् ।
स कालोऽग्निर्हरो रुद्रो गीयते वेदवादिभिः ॥ १५॥

कालः सृजति भूतानि कालः संहरते प्रजाः ।
सर्वे कालस्य वशगा न कालः कस्यचिद् वशे ॥ १६॥

प्रधानं पुरुषस्तत्त्वं महानात्मा त्वहंकृतिः ।
कालेनान्यानि तत्त्वानि समाविष्टानि योगिना ॥ १७॥

तस्य सर्वजगत्सूतिः शक्तिर्मायेति विश्रुता ।
तयेदं भ्रामयेदीशो मायावी पुरुषोत्तमः ॥ १८॥

सैषा मायात्मिका शक्तिः सर्वाकारा सनातनी ।
वैश्वरूपं महेशस्य सर्वदा सम्प्रकाशयेत् ॥ १९॥

अन्याश्च शक्तयो मुख्यास्तस्य देवस्य निर्मिताः ।
ज्ञानशक्तिः क्रियाशक्तिः प्राणशक्तिरिति त्रयम् ॥ २०॥

सर्वासामेव शक्तीनां शक्तिमन्तो विनिर्मिताः ।
माययैवाथ विप्रेन्द्राः सा चानादिरनन्तयाः ॥ २१॥

सर्वशक्त्यात्मिका माया दुर्निवारा दुरत्यया ।
मायावी सर्वशक्तीशः कालः कालकारः प्रभुः ॥ २२॥

करोति कालः सकलं संहरेत् काल एव हि ।
कालः स्थापयते विश्वं कालाधीनमिदं जगत् ॥ २३॥

लब्ध्वा देवाधिदेवस्य सन्निधिं परमेष्ठिनः ।
अनन्तस्याखिलेशस्य शंभोः कालात्मनः प्रभोः ॥ २४॥

प्रधानं पुरुषो माया माया चैवं प्रपद्यते ।
एका सर्वगतानन्ता केवला निष्कला शिवा ॥ २५॥

एका शक्तिः शिवैकोऽपि शक्तिमानुच्यते शिवः ।
शक्तयः शक्तिमन्तोऽन्ये सर्वशक्तिसमुद्भवाः ॥ २६॥

शक्तिशक्तिमतोर्भेदं वदन्ति परमार्थतः ।
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः ॥ २७॥

शक्तयो गिरिजा देवी शक्तिमन्तोऽथ शंकरः ।
विशेषः कथ्यते चायं पुराणे ब्रह्मवादिभिः ॥ २८॥

भोग्या विश्वेश्वरी देवी महेश्वरपतिव्रता ।
प्रोच्यते भगवान् भोक्ता कपर्दी नीललोहितः ॥ २९॥

मन्ता विश्वेश्वरो देवः शंकरो मन्मथान्तकः ।
प्रोच्यते मतिरीशानी मन्तव्या च विचारतः ॥ ३०॥

इत्येतदखिलं विप्राः शक्तिशक्तिमदुद्भवम् ।
प्रोच्यते सर्ववेदेषु मुनिभिस्तत्त्वदर्शिभिः ॥ ३१॥

एतत्प्रदर्शितं दिव्यं देव्या माहात्म्यमुत्तमम् ।
सर्ववेदान्तवेदेषु निश्चितं ब्रह्मवादिभिः ॥ ३२॥

एकं सर्वगतं सूक्ष्मं कूटस्थमचलं ध्रुवम् ।
योगिनस्तत्प्रपश्यन्ति महादेव्याः परं पदम् ॥ ३३॥

आनन्दमक्षरं ब्रह्म केवलं निष्कलं परम् ।
योगिनस्तत्प्रपश्यन्ति महादेव्याः परं पदम् ॥ ३४॥

परात्परतरं तत्त्वं शाश्वतं शिवमच्युतम् ।
अनन्तप्रकृतौ लीनं देव्यास्तत्परमं पदम् ॥ ३५॥

शुभं निरञ्जनं शुद्धं निर्गुणं द्वैतवर्जितम् ।
आत्मोपलब्धिविषयं देव्यास्ततपरमं पदम् ॥ ३६॥

सैषा धात्री विधात्री च परमानन्दमिच्छताम् ।
संसारतापानखिलान्निहन्तीश्वरसंश्रया ॥ ३७॥

तस्माद्विमुक्तिमन्विच्छन् पार्वतीं परमेश्वरीम् ।
आश्रयेत्सर्वभूतानामात्मभूतां शिवात्मिकाम् ॥ ३८॥

लब्ध्वा च पुत्रीं शर्वाणीं तपस्तस्वा सुदुश्चरन् ।
सभार्यः शरणं यातः पार्वतीं परमेश्वरीम् ॥ ३९॥

तां दृष्ट्वा जायमानां च स्वेच्छयैव वराननाम् ।
मेना हिमवतः पत्नी प्राहेदं पर्वतेश्वरम् ॥ ४०॥

मेनोवाच --
पश्य बालामिमां राजन् राजीवसदृशाननाम् ।
हिताय सर्वभूतानां जाता च तपसाऽऽवयोः ॥ ४१॥

सोऽपि दृष्ट्वा ततः देवीं तरुणादित्यसन्निभाम् ।
कपर्दिनीं चतुर्वक्त्रां त्रिनेत्रामतिलालसाम् ॥ ४२॥

अष्टहस्तां विशालाक्षीं चन्द्रावयवभूषणाम् ।
निर्गुणां सगुणां साक्षात्सदसद्व्यक्तिवर्जिताम् ॥ ४३॥

प्रणम्य शिरसा भूमौ तेजसा चातिविह्वलः ।
भीतः कृताञ्जलिस्तस्याः प्रोवाच परमेश्वरीम् ॥ ४४॥

हिमवानुवाच --
का त्वं देवि विशालाक्षि शशाङ्कावयवाङ्किते ।
न जाने त्वामहं वत्से यथावद्ब्रूहि पृच्छते ॥ ४५॥

गिरीन्द्रवचनं श्रुत्वा ततः सा परमेश्वरी ।
व्याजहार महाशैलं योगिनामभयप्रदा ॥ ४६॥

देव्युवाच --
मां विद्धि परमां शक्तिं परमेश्वरसमाश्रयाम् ।
अनन्यामव्ययामेकां यां पश्यन्ति मुमुक्षवः ॥ ४७॥

अहं वै सर्वभावानात्मा सर्वान्तरा शिवा ।
शाश्वतैश्वर्यविज्ञानमूर्तिः सर्वप्रवर्तिका ॥ ४८॥

अनन्ताऽनन्तमहिमा संसारार्णवतारिणी ।

दिव्यं ददामि ते चक्षुः पश्य मे रूपमैश्वरम् ॥ ४९॥

एतावदुक्त्वा विज्ञानं दत्त्वा हिमवते स्वयम् ।
स्वं रूपं दर्शयामास दिव्यं तत् पारमेश्वरम् ॥ ५०॥

कोटिसूर्यप्रतीकाशं तेजोबिम्बं निराकुलम् ।
ज्वालामालासहस्राढ्यं कालानलशतोपमम् ॥ ५१॥

दंष्ट्राकरालं दुर्धर्षं जटामण्डलमण्डितम् ।
त्रिशूलवरहस्तं च घोररूपं भयानकम् ॥ ५२॥

प्रशान्तं सोम्यवदनमनन्ताश्चर्यसंयुतम् ।
चन्द्रावयवलक्ष्माणं चन्द्रकोटिसमप्रभम् ॥ ५३॥

किरीटिनं गदाहस्तं नूपुरैरुपशोभितम् ।
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ॥ ५४॥

शङ्खचक्रधरं काम्यं त्रिनेत्रं कृत्तिवाससम् ।
अण्डस्थं चाण्डबाह्यस्थं बाह्यमाभ्यन्तरं परम् ॥ ५५॥

सर्वशक्तिमयं शुभ्रं सर्वाकारं सनातनम् ।
ब्रह्मेन्द्रोपेन्द्रयोगीन्द्रैर्वन्द्यमानपदाम्बुजम् ॥ ५६॥

सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् ।
सर्वमावृत्य तिष्ठन्तं ददर्श परमेश्वरम् ॥ ५७॥

दृष्ट्वा तदीदृशं रूपं देव्या माहेश्वरं परम् ।
भयेन च समाविष्टः स राजा हृष्टमानसः ॥ ५८॥

आत्मन्याधाय चात्मानमोङ्कारं समनुस्मरन् ।
नाम्नामष्टसहस्रेण तुष्टाव परमेश्वरीम् ॥ ५९॥

हिमवानुवाच --
शिवोमा परमा शक्तिरनन्ता निष्कलामला ।
शान्ता माहेश्वरी नित्या शाश्वती परमाक्षरा ॥ ६०॥

अचिन्त्या केवलाऽनन्त्या शिवात्मा परमात्मिका ।
अनादिरव्यया शुद्धा देवात्मा सर्वगाऽचला ॥ ६१॥

एकानेकविभागस्था मायातीता सुनिर्मला ।
महामाहेश्वरी सत्या महादेवी निरञ्जना ॥ ६२॥

काष्ठा सर्वान्तरस्था च चिच्छक्तिरतिलालसा ।
नन्दा सर्वात्मिका विद्या ज्योतीरूपाऽमृताक्षरा ॥ ६३॥

शान्तिः प्रतिष्ठा सर्वेषां निवृत्तिरमृतप्रदा ।
व्योममूर्तिर्व्योमलया व्योमाधाराऽच्युताऽमरा ॥ ६४॥

अनादिनिधनाऽमोघा कारणात्मा कुलाकुला ।
क्रतुः प्रथमजा नाभिरमृतस्यात्मसंश्रया ॥ ६५॥

प्राणेश्वरप्रिया माता महामहिषघातिनी ।
प्राणेश्वरी प्राणरूपा प्रधानपुरुषेश्वरी ॥ ६६॥

महामाया सुदुष्पूरा मूलप्रकृतिरीश्वरी ।
सर्वशक्तिकलाकारा ज्योत्स्ना धौर्महिमास्पदा ॥ ६७॥

सर्वकार्यनियन्त्री च सर्वभूतेश्वरेश्वरी ।
संसारयोनिः सकला सर्वशक्तिसमुद्भवा ॥ ६८॥

संसारपारा दुर्वारा दुर्निरीक्ष्य दुरासदा ।
प्राणशक्तिः प्राणविद्या योगिनी परमा कला ॥ ६९॥

महाविभूतिदुर्धर्षा मूलप्रकृतिसम्भवा ।
अनाद्यनन्तविभवा परार्था पुरुषारणिः ॥ ७०॥

सर्गस्थित्यन्तकरणी सुदुर्वाच्या दुरत्यया ।
शब्दयोनिः शब्दमयी नादाख्या नादविग्रहा ॥ ७१॥

अनादिरव्यक्तगुणा महानन्दा सनातनी ।
आकाशयोनिर्योगस्था महायोगेश्वरेश्वरी ॥ ७२॥

महामाया सुदुष्पारा मूलप्रकृतिरीश्वरी ।
प्रधानपुरुषातीता प्रधानपुरुषात्मिका ॥ ७३॥

पुराणी चिन्मयी पुंसामादिः पुरुषरूपिणी ।

भूतान्तरात्मा कूटस्था महापुरुषसंज्ञिता ॥ ७४॥

जन्ममृत्युजरातीता सर्वशक्तिसमन्विता ।
व्यापिनी चानवच्छिन्ना प्रधानानुप्रवेशिनी ॥ ७५॥

क्षेत्रज्ञशक्तिरव्यक्तलक्षणा मलवर्जिता ।
अनादिमायासंभिन्ना त्रितत्त्वा प्रकृतिर्गुहा ॥ ७६॥

महामायासमुत्पन्ना तामसी पौरुषी ध्रुवा ।
व्यक्ताव्यक्तात्मिका कृष्णा रक्ता शुक्ला प्रसूतिका ॥ ७७॥

अकार्या कार्यजननी नित्यं प्रसवधर्मिणी ।
सर्गप्रलयनिर्मुक्ता सृष्टिस्थित्यन्तधर्मिणी ॥ ७८॥

ब्रह्मगर्भा चतुर्विंशा पद्मनाभाऽच्युतात्मिका ।
वैद्युती शाश्वती योनिर्जगन्मातेश्वरप्रिया ॥ ७९॥

सर्वाधारा महारूपा सर्वैश्वर्यसमन्विता ।
विश्वरूपा महागर्भा विश्वेशेच्छानुवर्तिनी ॥ ८०॥

महीयसी ब्रह्मयोनिः महालक्ष्मीसमुद्भवा ।
महाविमानमध्यस्था महानिद्रात्महेतुका ॥ ८१॥

सर्वसाधारणी सूक्ष्मा ह्यविद्या पारमार्थिका ।
अनन्तरूपाऽनन्तस्था देवी पुरुषमोहिनी ॥ ८२॥

अनेकाकारसंस्थाना कालत्रयविवर्जिता ।
ब्रह्मजन्मा हरेर्मूर्तिर्ब्रह्मविष्णुशिवात्मिका ॥ ८३॥

ब्रह्मेशविष्णुजननी ब्रह्माख्या ब्रह्मसंश्रया ।
व्यक्ता प्रथमजा ब्राह्मी महती ज्ञानरूपिणी ॥ ८४॥

वैराग्यैश्वर्यधर्मात्मा ब्रह्ममूर्तिर्हृदिस्थिता ।
अपांयोनिः स्वयंभूतिर्मानसी तत्त्वसंभवा ॥ ८५॥

ईश्वराणी च शर्वाणी शंकरार्द्धशरीरिणी ।
भवानी चैव रुद्राणी महालक्ष्मीरथाम्बिका ॥ ८६॥

महेश्वरसमुत्पन्ना भुक्तिमुक्तिफलप्रदा ।
सर्वेश्वरी सर्ववन्द्या नित्यं मुदितमानसा ॥ ८७॥

ब्रह्मेन्द्रोपेन्द्रनमिता शंकरेच्छानुवर्तिनी ।
ईश्वरार्द्धासनगता महेश्वरपतिव्रता ॥ ८८॥

सकृद्विभाता सर्वार्ति समुद्रपरिशोषिणी ।
पार्वती हिमवत्पुत्री परमानन्ददायिनी ॥ ८९॥

गुणाढ्या योगजा योग्या ज्ञानमूर्तिर्विकासिनी ।
सावित्रीकमला लक्ष्मीः श्रीरनन्तोरसि स्थिता ॥ ९०॥

सरोजनिलया मुद्रा योगनिद्रा सुरार्दिनी ।
सरस्वती सर्वविद्या जगज्ज्येष्ठा सुमङ्गला ॥ ९१॥

वाग्देवी वरदा वाच्या कीर्तिः सर्वार्थसाधिका ।
योगीश्वरी ब्रह्मविद्या महाविद्या सुशोभना ॥ ९२॥

गुह्यविद्यात्मविद्या च धर्मविद्यात्मभाविता ।
स्वाहा विश्वंभरा सिद्धिः स्वधा मेधा धृतिः श्रुतिः ॥ ९३॥

नीतिः सुनीतिः सुकृतिर्माधवी नरवाहिनी ।
पूज्या विभावरी सौम्या भोगिनी भोगशायिनी ॥ ९४॥

शोभा वंशकरी लोला मालिनी परमेष्ठिनी ।
त्रैलोक्यसुन्दरी रम्या सुन्दरी कामचारिणी ॥ ९५॥

महानुभावा सत्त्वस्था महामहिषमर्दिनी ।
पद्ममाला पापहरा विचित्रा मुकुटानना ॥ ९६॥

कान्ता चित्राम्बरधरा दिव्याबरणभूषिता ।
हंसाख्या व्योमनिलया जगत्सृष्टिविवर्द्धिनी ॥ ९८॥

निर्यन्त्रा यन्त्रवाहस्था नन्दिनी भद्रकालिका ।
आदित्यवर्णा कौमारी मयूरवरवाहिनी ॥ ९९॥

वृषासनगता गौरी महाकाली सुरार्चिता ।
अदितिर्नियता रौद्री पद्मगर्भा विवाहना ॥ १००॥

विरूपाक्षी लेलिहाना महापुरनिवासिनी ।
महाफलाऽनवद्याङ्गी कामरूपा विभावरी ॥ १०१॥

विचित्ररत्नमुकुटा प्रणतार्तिप्रभञ्जनी ।
कौशिकी कर्षणी रात्रिस्त्रिदशार्तिविनाशिनी ॥ १०२॥

बहुरूपा स्वरूपा च विरूपा रूपवर्जिता ।
भक्तार्तिशमनी भव्या भवभारविनाशनी ॥ १०३॥

निर्गुणा नित्यविभवा निःसारा निरपत्रपा ।
यशस्विनी सामगीतिर्भवाङ्गनिलयालया ॥ १०४॥

दीक्षा विद्याधरी दीप्ता महेन्द्रविनिपातिनी ।
सर्वातिशायिनी विश्वा सर्वसिद्धिप्रदायिनी ॥ १०५॥

सर्वेश्वरप्रिया भार्या समुद्रान्तरवासिनी ।
अकलङ्का निराधारा नित्यसिद्धा निरामया ॥ १०६॥

कामधेनुर्बृहद्गर्भा धीमती मोहनाशिनी ।
निःसङ्कल्पा निरातङ्का विनया विनयप्रदा ॥ १०७॥

ज्वालामालासहस्राढ्या देवदेवी मनोमयी ।
महाभगवती भर्गा वासुदेवसमुद्भवा ॥ १०८॥

महेन्द्रोपेन्द्रभगिनी भक्तिगम्या परावरा ।
ज्ञानज्ञेया जरातीता वेदान्तविषया गतिः ॥ १०९॥

दक्षिणा दहना दाह्या सर्वभूतनमस्कृता ।
योगमाया विभागज्ञा महामाया महीयसी ॥ ११०॥

संध्या सर्वसमुद्भूतिर्ब्रह्मवृक्षाश्रयानतिः ।
बीजाङ्कुरसमुद्भूतिर्महाशक्तिर्महामतिः ॥ १११॥

ख्यातिः प्रज्ञा चितिः संवित् महाभोगीन्द्रशायिनी ।
विकृतिः शाङ्करी शास्त्री गणगन्धर्वसेविता ॥ ११२॥

वैश्वानरी महाशाला देवसेना गुहप्रिया ।

महारात्रिः शिवानन्दा शची दुःस्वप्ननाशिनी ॥ ११३॥

इज्या पूज्या जगद्धात्री दुर्विज्ञेया सुरूपिणी ।
गुहाम्बिका गुणोत्पत्तिर्महापीठा मरुत्सुता ॥ ११४॥

हव्यवाहान्तरागादिः हव्यवाहसमुद्भवा ।
जगद्योनिर्जगन्माता जन्ममृत्युजरातिगा ।
बुद्धिमाता बुद्धिमती पुरुषान्तरवासिनी ॥ ११७॥

तपस्विनी समाधिस्था त्रिनेत्रा दिविसंस्थिता ।
सर्वेन्द्रियमनोमाता सर्वभूतहृदिस्थिता ॥ ११८॥

संसारतारिणी विद्या ब्रह्मवादिमनोलया ।
ब्रह्माणी बृहती ब्राह्मी ब्रह्मभूता भवारणी ॥ ११९॥

हिरण्मयी महारात्रिः संसारपरिवर्तिका ।
सुमालिनी सुरूपा च भाविनी तारिणी प्रभा ॥ १२०॥

उन्मीलनी सर्वसहा सर्वप्रत्ययसाक्षिणी ।
सुसौम्या चन्द्रवदना ताण्डवासक्तमानसा ॥ १२१॥

सत्त्वशुद्धिकरी शुद्धिर्मलत्रयविनाशिनी ।
जगत्प्रिया जगन्मूर्तिस्त्रिमूर्तिरमृताश्रया ॥ १२२॥

निराश्रया निराहारा निरङ्कुरवनोद्भवा ।
चन्द्रहस्ता विचित्राङ्गी स्रग्विणी पद्मधारिणी ॥ १२३॥

परावरविधानज्ञा महापुरुषपूर्वजा ।
विद्येश्वरप्रिया विद्या विद्युज्जिह्वा जितश्रमा ॥ १२४॥

विद्यामयी सहस्राक्षी सहस्रवदनात्मजा ।
सहस्ररश्मिः सत्त्वस्था महेश्वरपदाश्रया ॥ १२५॥

क्षालिनी सन्मयी व्याप्ता तैजसी पद्मबोधिका ।
महामायाश्रया मान्या महादेवमनोरमा ॥ १२६॥

व्योमलक्ष्मीः सिंहरथा चेकितानामितप्रभा ।
वीरेश्वरी विमानस्था विशोका शोकनाशिनी ॥ १२७॥

अनाहता कुण्डलिनी नलिनी पद्मवासिनी ।
सदानन्दा सदाकीर्तिः सर्वभूताश्रयस्थिता ॥ १२८॥

वाग्देवता ब्रह्मकला कलातीता कलारणी ।
ब्रह्मश्रीर्ब्रह्महृदया ब्रह्मविष्णुशिवप्रिया ॥ १२९॥

व्योमशक्तिः क्रियाशक्तिर्ज्ञानशक्तिः परागतिः ।
क्षोभिका बन्धिका भेद्या भेदाभेदविवर्जिता ॥ १३०॥

अभिन्नाभिन्नसंस्थाना वंशिनी वंशहारिणी ।
गुह्यशक्तिर्गुणातीता सर्वदा सर्वतोमुखी ॥ १३१॥

भगिनी भगवत्पत्नी सकला कालकारिणी ।
सर्ववित् सर्वतोभद्रा गुह्यातीता गुहारणिः ॥ १३२॥

प्रक्रिया योगमाता च गङ्गा विश्वेश्वरेश्वरी ।
कपिला कापिला कान्ताकनकाभाकलान्तरा ॥ १३३॥

पुण्या पुष्करिणी भोक्त्री पुरंदरपुरस्सरा ।
पोषणी परमैश्वर्यभूतिदा भूतिभूषणा ॥ १३४॥

पञ्चब्रह्मसमुत्पत्तिः परमार्थार्थविग्रहा ।
धर्मोदया भानुमती योगिज्ञेय मनोजवा ॥ १३५॥

मनोहरा मनोरक्षा तापसी वेदरूपिणी ।
वेदशक्तिर्वेदमाता वेदविद्याप्रकाशिनी ॥ १३६॥

योगेश्वरेश्वरी माता महाशक्तिर्मनोमयी ।
विश्वावस्था वियन्मूर्तिर्विद्युन्माला विहायसी ॥ १३७॥

किन्नरी सुरभिर्वन्द्या नन्दिनी नन्दिवल्लभा ।
भारती परमानन्दा परापरविभेदिका ॥ १३८॥

सर्वप्रहरणोपेता काम्या कामेश्वरेश्वरी ।
अचिन्त्याऽचिन्त्यविभवा हृल्लेखा कनकप्रभा ॥ १३९॥

कूष्माण्डी धनरत्नाढ्या सुगन्धा गन्धदायिनी ।

त्रिविक्रमपदोद्भूता धनुष्पाणिः शिवोदया ॥ १४०॥

सुदुर्लभा धनाद्यक्षा धन्या पिङ्गललोचना ।
शान्तिः प्रभावती दीप्तिः पङ्कजायतलोचना ॥ १४१॥

आद्या हृत्कमलोद्भूता गवां मता रणप्रिया ।
सत्क्रिया गिरिजा शुद्धा नित्यपुष्टा निरन्तरा ॥ १४२॥

दुर्गा कात्यायनी चण्डी चर्चिका शान्तविग्रहा ।
हिरण्यवर्णा रजनी जगद्यन्त्रप्रवर्तिका ॥ १४३॥

मन्दराद्रिनिवासा च शारदा स्वर्णमालिनी ।
रत्नमाला रत्नगर्भा पृथ्वी विश्वप्रमाथिनी ॥ १४४॥

पद्मानना पद्मनिभा नित्यतुष्टाऽमृतोद्भवा ।
धुन्वती दुःप्रकम्पा च सूर्यमाता दृषद्वती ॥ १४५॥

महेन्द्रभगिनी मान्या वरेण्या वरदायिका ।
कल्याणी कमला रामा पञ्चभूता वरप्रदा ॥ १४६॥

वाच्या वरेश्वरी वन्द्या दुर्जया दुरतिक्रमा ।
कालरात्रिर्महावेगा वीरभद्रप्रिया हिता ॥ १४७॥

भद्रकाली जगन्माता भक्तानां भद्रदायिनी ।
कराला पिङ्गलाकारा नामभेदा महामदा ॥ १४८॥

यशस्विनी यशोदा च षडध्वपरिवर्त्तिका ।
शङ्खिनी पद्मिनी सांख्या सांख्ययोगप्रवर्तिका ॥ १४९॥

चैत्रा संवत्सरारूढा जगत्सम्पूरणीन्द्रजा ।
शुम्भारिः खेचरीस्वस्था कम्बुग्रीवाकलिप्रिया ॥ १५०॥

खगध्वजा खगारूढा परार्या परमालिनी ।
ऐश्वर्यपद्मनिलया विरक्ता गरुडासना ॥ १५१॥

जयन्ती हृद्गुहा रम्या गह्वरेष्ठा गणाग्रणीः ।
संकल्पसिद्धा साम्यस्था सर्वविज्ञानदायिनी ॥ १५२॥

कलिकल्मषहन्त्री च गुह्योपनिषदुत्तमा ।
निष्ठा दृष्टिः स्मृतिर्व्याप्तिः पुष्टिस्तुष्टिः क्रियावती ॥ १५३॥

विश्वामरेश्वरेशाना भुक्तिर्मुक्तिः शिवाऽमृता ।
लोहिता सर्पमाला च भीषणी वनमालिनी ॥ १५४॥

अनन्तशयनाऽनन्ता नरनारायणोद्भवा ।
नृसिंही दैत्यमथनी शङ्खचक्रगदाधरा ॥ १५५॥

संकर्षणसमुत्पत्तिरम्बिकापादसंश्रया ।
महाज्वाला महामूर्तिः सुमूर्तिः सर्वकामधुक् ॥ १५६॥

सुप्रभा सुस्तना सौरी धर्मकामार्थमोक्षदा ।
भ्रूमध्यनिलया पूर्वा पुराणपुरुषारणिः ॥ १५७॥

महाविभूतिदा मध्या सरोजनयना समा ।
अष्टादशभुजानाद्या नीलोत्पलदलप्रभा । १५८॥

सर्वशक्त्यासनारूढा धर्माधर्मार्थवर्जिता ।
वैराग्यज्ञाननिरता निरालोका निरिन्द्रिया ॥ १५९॥

विचित्रगहनाधारा शाश्वतस्थानवासिनी ।
स्थानेश्वरी निरानन्दा त्रिशूलवरधारिणी ॥ १६०॥

अशेषदेवतामूर्तिर्देवता वरदेवता ।
गणाम्बिका गिरेः पुत्री निशुम्भविनिपातिनी ॥ १६१॥

अवर्णा वर्णरहिता त्रिवर्णा जीवसंभवा ।
अनन्तवर्णाऽनन्यस्था शंकरी शान्तमानसा ॥ १६२॥

अगोत्रा गोमती गोप्त्री गुह्यरूपा गुणोत्तरा ।
गौर्गीर्गव्यप्रिया गौणी गणेश्वरनमस्कृता ॥ १६३॥

सत्यमात्रा सत्यसन्ध्या त्रिसन्ध्या संधिवर्जिता ।
सर्ववादाश्रया सांख्या सांख्ययोगसमुद्भवा ॥ १६४॥

असंख्येयाऽप्रमेयाख्या शून्या शुद्धकुलोद्भवा ।
बिन्दुनादसमुत्पत्तिः शंभुवामा शशिप्रभा ॥ १६५॥

विसङ्गा भेदरहिता मनोज्ञा मधुसूदनी ।
महाश्रीः श्रीसमुत्पत्तिस्तमःपारे प्रतिष्ठिता ॥ १६६॥

त्रितत्त्वमाता त्रिविधा सुसूक्ष्मपदसंश्रया ।
शन्ता भीता मलातीता निर्विकारा निराश्रया ॥ १६७॥

शिवाख्या चित्तनिलया शिवज्ञानस्वरूपिणी ।
दैत्यदानवनिर्मात्री काश्यपी कालकर्णिका ॥ १६८॥

शास्त्रयोनिः क्रियामूर्तिश्चतुर्वर्गप्रदर्शिका ।
नारायणी नरोद्भूतिः कौमुदी लिङ्गधारिणी ॥ १६९॥

कामुकी ललिताभावा परापरविभूतिदा ।
परान्तजातमहिमा बडवा वामलोचना ॥ १७०॥

सुभद्रा देवकी सीता वेदवेदाङ्गपारगा ।
मनस्विनी मन्युमाता महामन्युसमुद्भवा ॥ १७१॥

अमृत्युरमृतास्वादा पुरुहूता पुरुष्टुता ।
अशोच्या भिन्नविषया हिरण्यरजतप्रिया ॥ १७२॥

हिरण्या राजती हैमा हेमाभरणभूषिता ।
विभ्राजमाना दुर्ज्ञेया ज्योतिष्टोमफलप्रदा ॥ १७३॥

महानिद्रासमुद्भूतिरनिद्रा सत्यदेवता ।
दीर्घा ककुद्मिनी हृद्या शान्तिदा शान्तिवर्द्धिनी ॥ १७४॥

लक्ष्म्यादिशक्तिजननी शक्तिचक्रप्रवर्तिका ।
त्रिशक्तिजननी जन्या षडूर्मिपरिवर्जिता ॥ १७५॥

सुधामा कर्मकरणी युगान्तदहनात्मिका ।
संकर्षणी जगद्धात्री कामयोनिः किरीटिनी ॥ १७६॥

ऐन्द्री त्रैलोक्यनमिता वैष्णवी परमेश्वरी ।
प्रद्युम्नदयिता दात्री युग्मदृष्टिस्त्रिलोचना ॥ १७७॥

मदोत्कटा हंसगतिः प्रचण्डा चण्डविक्रमा ।

वृषावेशा वियन्माता विन्ध्यपर्वतवासिनी ॥ १७८॥

हिमवन्मेरुनिलया कैलासगिरिवासिनी ।
चाणूरहन्तृतनया नीतिज्ञा कामरूपिणी ॥ १७९॥

वेदविद्याव्रतस्नाता धर्मशीलाऽनिलाशना ।
वीरभद्रप्रिया वीरा महाकामसमुद्भवा ॥ १८०॥

विद्याधरप्रिया सिद्धा विद्याधरनिराकृतिः ।
आप्यायनी हरन्ती च पावनी पोषणी खिला ॥ १८१॥

मातृका मन्मथोद्भूता वारिजा वाहनप्रिया ।
करीषिणी सुधावाणी वीणावादनतत्परा ॥ १८२॥

सेविता सेविका सेव्या सिनीवाली गरुत्मती ।
अरुन्धती हिरण्याक्षी मृगाङ्का मानदायिनी ॥ १८३॥

वसुप्रदा वसुमती वसोर्धारा वसुंधरा ।
धाराधरा वरारोहा वरावरसहस्रदा ॥ १८४॥

श्रीफला श्रीमती श्रीशा श्रीनिवासा शिवप्रिया ।
श्रीधरा श्रीकरी कल्या श्रीधरार्धशरीरिणी ॥ १८५॥

अनन्तदृष्टिरक्षुद्रा धात्रीशा धनदप्रिया ।
निहन्त्री दैत्यसङ्घानां सिंहिका सिंहवाहना ॥ १८६॥

सुषेणा चन्द्रनिलया सुकीर्तिश्छिन्नसंशया ।
रसज्ञा रसदा रामा लेलिहानामृतस्रवा ॥ १८७॥

नित्योदिता स्वयंज्योतिरुत्सुका मृतजीवना ।
वज्रदण्डा वज्रजिह्वा वैदेही वज्रविग्रहा ॥ १८८॥

मङ्गल्या मङ्गला माला मलिना मलहारिणी ।
गान्धर्वी गारुडी चान्द्री कम्बलाश्वतरप्रिया ॥ १८९॥

सौदामिनी जनानन्दा भ्रुकुटीकुटिलानना ।
कर्णिकारकरा कक्ष्या कंसप्राणापहारिणी ॥ १९०॥

युगन्धरा युगावर्त्ता त्रिसंध्या हर्षवर्धिनी ।
प्रत्यक्षदेवता दिव्या दिव्यगन्धा दिवापरा ॥ १९१॥

शक्रासनगता शाक्री सान्ध्या चारुशरासना ।
इष्टा विशिष्टा शिष्टेष्टा शिष्टाशिष्टप्रपूजिता ॥ १९२॥

शतरूपा शतावर्त्ता विनता सुरभिः सुरा ।
सुरेन्द्रमाता सुद्युम्ना सुषुम्णा सूर्यसंस्थिता ॥ १९३॥

समीक्ष्या सत्प्रतिष्ठा च निवृत्तिर्ज्ञानपारगा ।
धर्मशास्त्रार्थकुशला धर्मज्ञा धर्मवाहना ॥ १९४॥

धर्माधर्मविनिर्मात्री धार्मिकाणां शिवप्रदा ।
धर्मशक्ति र्धर्ममयी विधर्मा विश्वधर्मिणी ॥ १९५॥

धर्मान्तरा धर्ममेघा धर्मपूर्वा धनावहा ।
धर्मोपदेष्ट्री धर्मात्मा धर्मगम्या धराधरा ॥ १९६॥

कापाली सकलामूर्त्तिः कला कलितविग्रहा ।
सर्वशक्तिविनिर्मुक्ता सर्वशक्त्याश्रयाश्रया ॥ १९७॥

सर्वा सर्वेश्वरी सूक्ष्मा सूक्ष्मा ज्ञानस्वरूपिणी ।
प्रधानपुरुषेशेषा महादेवैकसाक्षिणी ॥ १९८॥

सदाशिवा वियन्मूर्त्तिर्विश्वमूर्त्तिरमूर्त्तिका ।
एवं नाम्नां सहस्रेण स्तुत्वाऽसौ हिमवान् गिरिः ॥ १९९॥

भूयः प्रणम्य भीतात्मा प्रोवाचेदं कृताञ्जलिः ।
यदेतदैश्वरं रूपं घोरं ते परमेश्वरि ॥ २००॥

भीतोऽस्मि साम्प्रतं दृष्ट्वा रूपमन्यत् प्रदर्शय ।
एवमुक्ताऽथ सा देवी तेन शैलेन पार्वती ॥ २०१॥

संहृत्य दर्शयामास स्वरूपमपरं पुनः ।
नीलोत्पलदलप्रख्यं नीलोत्पलसुगन्धिकम् ॥ २०२॥

द्विनेत्रं द्विभुजं सौम्यं नीलालकविभूषितम् ।
रक्तपादाम्बुजतलं सुरक्तकरपल्लवम् ॥ २०३॥

श्रीमद्विशालसंवृत्तंललाटतिलकोज्ज्वलम् ।
भूषितं चारुसर्वाङ्गं भूषणैरतिकोमलम् ॥ २०४॥

दधानमुरसा मालां विशालां हेमनिर्मिताम् ।
ईषत्स्मितं सुबिम्बोष्ठं नूपुरारावसंयुतम् ॥ २०५॥

प्रसन्नवदनं दिव्यमनन्तमहिमास्पदम् ।
तदीदृशं समालोक्य स्वरूपं शैलसत्तमः ॥ २०६॥

नाम्नामष्टसहस्रं तु देव्या यत् समुदीरितम् ।
ज्ञात्वाऽर्कमण्डलगतां संभाव्य परमेश्वरीम् ॥ २०७॥

अभ्यर्च्य गन्धपुष्पाद्यैर्भक्तियोगसमन्वितः ।
संस्मरन्परमं भावं देव्या माहेश्वरं परम् ॥ २०८॥

अनन्यमानसो नित्यं जपेदामरणाद् द्विजः ।
सोऽन्तकाले स्मृतिं लब्ध्वा परं ब्रह्माधिगच्छति ॥ २०९॥

अथवा जायते विप्रो ब्राह्मणानां कुले शुचौ ।
पूर्वसंस्कारमाहात्म्याद् ब्रह्मविद्यामवाप्नुयात् ॥ २१०॥

सम्प्राप्य योगं परमं दिव्यं तत् पारमेश्वरम् ।
शान्तः सर्वगातो भूत्वा शिवसायुज्यमाप्नुयात् ॥ २११॥

प्रत्येकं चाथ नामानि जुहुयात् सवनत्रयम् ।
पूतनादिकृतैर्दोषैर्ग्रहदोषैश्च मुच्यते ॥ २१२॥

जपेद् वाऽहरहर्नित्यं संवत्सरमतन्द्रितः ।
श्रीकामः पार्वतीं देवीं पूजयित्वा विधानतः ॥ २१३॥

सम्पूज्य पार्श्वतः शंभुं त्रिनेत्रं भक्तिसंयुतः ।
लभते महतीं लक्ष्मीं महादेवप्रसादतः ॥ २१४॥

तस्मात् सर्वप्रयत्नेन जप्तव्यं हि द्विजातिभिः ।
सर्वपापापनोदार्थं देव्या नाम सहस्रकम् ॥ २१५॥

॥ इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां
पूर्वविभागे श्रीदेवीसहस्रनामस्तोत्रम् ॥